ISSN-2231-0800

# गोमती

# GOMATI

## A JOURNAL FOR INDOLOGICAL RESEARCH






राष्ट्रियसंस्कृतसंस्थानम्
(मानितविश्वविद्यालयः) लखनऊ-परिसरः
(NAAC) द्वारा 'ए' श्रेण्यां में प्रत्यायितः
विशालखण्डः-4, गोमतीनगरम्, लखनऊ - 226010 (उत्तरप्रदेशः)
दूरभाषः 0522-2393749, फैक्स- 0522-2302993
Website: rskslucknowcampus.org Email:rskslucknow@yahoo.com
सत्रम् 2019-20

ISSN-2231-0800

# गोमती
# GOMATI
## A JOURNAL FOR INDOLOGICAL RESEARCH





**राष्ट्रियसंस्कृतसंस्थानम्**
(मानितविश्वविद्यालयः) लखनऊपरिसरः
विशालखण्डः-4, गोमतीनगरम्, लखनऊ-226010 (उत्तरप्रदेशः)

# गोमती

# GOMATI

## (A JOURNAL FOR INDOLOGICAL RESEARCH)



**संरक्षक:** प्रो. परमेश्वरनारायणशास्त्री, कुलपति:

**प्रधानसम्पादक:** प्रो. विजयकुमारजैन:, प्राचार्य:

**सम्पादक:** प्रो. मदनमोहनपाठक:

**प्रकाशक:** प्रो. विजयकुमारजैन:
प्राचार्य:
राष्ट्रियसंस्कृतसंस्थानम् (मानित-विश्वविद्यालय:)
लखनऊ-परिसर:, विशालखण्ड:-4, गोमतीनगरम्,
लखनऊ-226010, उत्तरप्रदेश:

**Publisher:** Principal
Rashtriya Sanskrit Sansthan (Deemed University)
Lucknow Campus, Vishal Khand-4, Gomti Nagar,
Lucknow-226010 (U.P.)

**मुद्रक:** पनार ऑफसेट, अशोक मार्ग, लखनऊ

# प्रधान-सम्पादकीयम्

**अज्ञान-तिमिरान्धानां ज्ञानाञ्जन-शलाकया।**

**चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः॥**

अखण्डब्रह्माण्डनायकस्य महत्यनुकम्पया अस्यां करोनामहामार्यामपि अस्माकं देशः सुरक्षितः संरक्षितश्च दृश्यते। यद्यपि समग्रेऽपि विश्वे करोनाविषाणुप्रकोपात् अतीव अशान्तेः भयस्य च वातावरणं दृश्यते। अनेन विश्वस्य सर्वस्मिन्विभागे विकासस्य चक्रम् अवरुद्धमिव प्रतिभाति। अनेन शिक्षाजगत्यपि विकासः कश्चित् अवरुद्ध इव प्रतीयते। तथापि दूरस्थ शैक्षिकोपकरणमाध्यमेन शिक्षाविदः स्वीयं दायित्वं सम्पादयान्तीति अस्माकं समेषामपि शास्त्रानुरागिणां कृते महतः प्रमोदस्य विषयः। दूरस्थमाध्यमेन शिक्षायाः आदानप्रदानव्यवस्था भारतीयसंस्कृतौ प्राचीनकालादेव विद्यते। सूर्यसिद्धान्तस्य प्रणेतुः मयासुर-सूर्यांशपुरुषयोः सम्वादस्याख्यानं भवतु अथवा हस्तिनापुरस्य राजभवने अवस्थितेन महामन्त्रिणा संजयेन महाभारतयुद्धवृतान्तमवगम्य धृतराष्ट्र प्रति तस्य अख्यानस्य वर्णनं वा, सर्वमपि दूरस्थशिक्षायाः भिन्न भिन्नं स्वरूपमेव दृश्यते। पूर्वं कुत्रचिदाध्यात्मिकज्ञानबलस्य प्राबल्यं दृश्यते कुत्रचित् योगबलस्य प्राबल्यं वा, सर्वत्र दृश्यते दूरस्थशिक्षायाः भिन्न भिन्नं स्वरूपम्। अद्यत्वे वैज्ञानिकाः तं सर्वमपि दृश्यं मनसि निधाय भौतिकोपकरणैः तत्सर्वमपि कार्यं साधयन्ति। यद्द्वारा अस्माकं देशे सर्वस्मिन्नपि क्षेत्रे कार्यम् अनवरुद्धं दृश्यते।

अद्यत्वे सः कालः समागतो विद्यते यत्र वयं सर्वेऽपि प्राच्यविद्यानिष्णाताः आधुनिकविज्ञानेन सह सम्यक् सम्बन्धं संस्थाप्य अध्ययनाध्यापनादिषु क्षेत्रेषु प्रवृताः भवेम। अन्यथा अस्माभिः लक्ष्यसिद्धिर्नैव प्राप्स्यते। समग्रेऽपि विश्वे/देशे अन्तर्जाल-(Internet) माध्यमेन समग्रमपि कार्यं प्रचलति। अन्तर्जालः (Internet) न केवलं शिक्षाजगतः अध्ययनाध्यापनान्वेषणादिषु क्षेत्रेषु उपकारको विद्यते, अपितु समेष्वपि क्षेत्रेषु अयं प्राणवायु इव अत्यावश्यकः प्रतिभाति। अस्याः विध ायाः परिज्ञानं समेषां कृते परमावश्यकम्।

करोनायाः विभिषिकायामपि परिसरस्यास्य सर्वेऽपि आचार्याः अधिकारिणः छात्राश्च महता धैर्येन सर्वमपि स्वीयं दायित्वं साधयन्तीति अस्माकं समेषां कृते विद्यते हर्षस्य विषयः। आशासे अग्रेऽपि मुख्यालयस्य शासनस्य च निर्देशानुसारं सर्वे स्वीयं दायित्वं निर्वहन्तः संस्कृतमातुः सेवायां निरताः सन्तः स्वीयं जीवनं सफलं करिष्यन्ति।

प्रचलितस्यास्य 2019-20 शैक्षिकसत्रस्य सारस्वतयज्ञरूपं गोमती-पत्रिकायाः प्रकाशनकार्यं महता श्रमेण दत्तावधानेन च ज्योतिषविभागप्रमुखेन आचार्यमदनमोहनपाठकेन सम्पादितमिति मे हर्षस्थानम्। अत्र विधीयमानस्य यज्ञस्य ऋत्विग्रूपाः समेऽपि वन्दनीयाः लेखकाः पाठकाश्च अभिनन्दनीयाः सन्ति। मनसा वाचा कर्मणा इह कर्मणि सहयोगप्रदातृभ्यः भूयांसि अभिनन्दनानि।

**विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह।**

**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते।।**

विदुषां वशंवदः

**प्रो. विजयकुमारजैनः**

प्राचार्यः

## प्रस्तावना

**संस्कृतं नाम दैवी वागन्वाख्यातं महर्षिभिः** इति संस्कृतभाषायाः महत्त्वबोधकं महाकविदण्डिनः पद्यमिदं सर्वजनेषु प्रसिद्धमेव विद्यते। अनेन महाकविदण्डिनः बचनेन संस्कृतभाषा देवभाषा इत्युच्यते। संस्कृतसाहित्यजगति महाकविदण्डिनः स्थानं महर्षिवाल्मीकि एवञ्च वेदव्यास इव सर्वोच्चशिखरे वर्तते। यतः संस्कृत-साहित्यजगतः पद्यमिदमतीव महनीयं सर्वजनप्रसिद्धञ्चास्ति। तद्यथा-

**जाते जगति वाल्मीकौ कविरित्यभिधा भवेत्।**

**कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि॥** - साहित्यभाण्डागारम्

न केवलमेवम्भूतः संस्कृतजगतः आचार्यः संस्कृतस्य महत्त्वं वदति अपितु सर्वेऽपि भाषाविदः संस्कृतस्य माहात्म्यमेकतन्त्रेणैव स्वीकुर्वन्ति। देवभाषायाः कीदृशं गाम्भीर्यं विद्यते इत्यस्यानुमानं गुरोः प्रदत्तलक्षणप्रसङ्गे सम्यक् द्रष्टुं शक्यते। तद्यथा गुरोः लक्षणम्-

**संस्कृतैः प्राकृतैर्वाक्यैर्यः शिष्यमनुरूपतः।**

**देशभाषाद्युपायैश्च बोधयेत् स गुरुः स्मृतः॥**

अर्थात् यः अध्यापकः संस्कृतैर्वाक्यैरथवा प्राकृतैर्वाक्यैः तथा देशभाषाद्युपायैश्च शिष्यमनुरूपतः बोधयति स एव गुरुपदवाच्यो भवति। अत्र संस्कृतभाषायामेव बोधयितुं सर्वादौ निर्देशः प्राप्यते। अनेनापि संस्कृतस्य महत्त्वं द्रष्टुं शक्यते।

यद्यपि भाषाशब्दस्य द्वादश पर्यायवाचिनः शब्दाः वर्तन्ते। अमरकोषकारेण श्रीअमरसिंहेन भाषायाः पर्यायवाचिनां शब्दानां प्रयोगक्रमे सर्वादौ ब्राह्मीशब्दस्यैव प्रयोगो विहितः। तद्यथा-

**ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती।**

**व्यवहार उक्तिर्लपितं भाषितं वचनं वचः॥** - अमरकोषे 6/1/1/3

इत्थं महन्महत्त्वाधायकस्य संस्कृतस्य संरक्षणार्थं भारतसर्वकारस्य मानवसंसाधनविकासमन्त्रालयेन सञ्चालितं राष्ट्रियसंस्कृतसंस्थानन्तत्रापि लखनऊ-परिसरः सर्वतोभावेन सर्वथा प्रवृत्तो वर्तते। अत्र संस्कृसंवर्धनस्य बहुषु उपक्रमेषु गोमतीनामिकायाः पत्रिकायाः प्रकाशनमन्यतम्। पत्रिकायामस्यां बहूनामाचार्याणां ज्ञानविज्ञानसंवलिताः लेखाः यत्र पत्रिकायाः अस्याः उत्कृष्टतां द्योतयति तत्रैव छात्राणं विशेषेण शोधच्छात्राणाञ्च लेखाः संस्कृतच्छेत्रे नवागतानां छात्राणां कृते लेखनकौशलस्य विकासदृष्ट्या प्रेरणां प्रददाति।

अस्मिन् सारस्वतयज्ञकर्मणि बहूनां सहयोगः अस्माभिरनुभूयते एव। तेषां कृते कृतज्ञताज्ञापनमपरिहार्यमेव। तस्मिन् सन्दर्भे सर्वादौ संस्मर्यन्ते संस्थानस्य प्राणभूताः कुलपतयः आचार्याः

प्रो. परमेश्वरनारायणशास्त्रिमहोदयाः, कुलसचिवाः प्रो. एस. सुब्रह्मण्यशर्ममहोदयाः येषां प्रेरणया एव एवम्भूताः अनेके कार्यक्रमाः संस्थानपरिसरेषु सुसम्पन्नाः भवन्ति। तेषां कृते धन्यवादान् समर्पयामि। तदनु शोधलेखप्रदातारो वन्दनीयाः आचार्याः अभिनन्दनीयाः वन्दनीयाश्च सन्ति। एवमेव परिसरस्य अनुसन्दिधित्सवः शोधच्छात्राः, छात्राः, छात्र्यश्च शुभाशीर्भाजाः सन्ति। परिसरस्य विकासपथप्रदर्शकाः प्राचार्याः प्रो. विजयकुमारजैनमहाशयाः विशेषेण अभिनन्दनीयाः सन्ति, येषां सत्प्रेरणया एवं भूताः नैके शास्त्रसम्वर्धिनः कार्यक्रमाः परिसरेऽस्मिन् समायोज्यन्ते। एवमेव परिसरस्य सर्वे आचार्याः अधिकारिणः कर्मचारिणः छात्राः पत्रिकायाश्च पाठकाः सर्वेप्येते विशेषेण धन्यवादार्हाः सन्ति।

कस्मिँश्चित् कर्मणि त्रुटयः स्वाभाविक्य एव। अतः प्रकाशनकर्मणि टङ्ककजन्यदोषात् बुद्धिभ्रमदोषाच्च या अशुद्धयस्ताः पूर्वापरसम्बन्धं संस्थाप्य संशोध्य व्यवहरन्त्विति प्रणतिपुरःसरं विनिवेदनम्।

खलो मृगयते दोषान् गुणपूर्णेषु वस्तुषु। वने पुष्पफलाकीर्णे पुरीषमिव सूकरः॥

विनयावनतः

**प्रो. मदनमोहनपाठकः**

# विषय-सूची

## संस्कृतखण्डः

## हिन्दी खण्ड



## आंग्ल भाषा

# योगदर्शने शिक्षामनोविज्ञानतत्त्वानि

- प्रो. लोकमान्यमिश्रः

परमास्तिकानां भारतीयानां विदुषां सृष्टिविषयकमभिमतं परमेश्वरात् सम्बद्धं वर्तते। तेषामभिप्रायो वर्तते यत् सर्वा एव सृष्टिविषयिणी संरचना ईश्वरकृता वर्तते इति। तत्रापि इदम्प्रथमतया वेदानां रचनाऽभवदिति। महाभारतं प्रतिपादयति यथा हि-

**अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।**

**आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥**[1]

समेषां शास्त्राणां विकासो वेदानां प्रवृत्तिरूपेण जात इति। एतस्मिन् विकासक्रमे दर्शनशास्त्राणां विकासो हि वैशिष्ट्यं बिभर्ति। दर्शनशास्त्रे परमसत्यस्य सिद्धान्तानां तत्कारणानाञ्च विवेचनं विधीयते। एतद् यथार्थस्य परीक्षणाय निकषभूतं वर्तते। दर्शने जीवनहेतवो विचार्यन्ते। अत्र सत्यस्य ज्ञानस्य चान्वेषणं क्रियते। दर्शने तर्कपूर्वकं विधिपूर्वकं क्रमबद्धञ्च विचारो विधीयते। पाश्चात्याः दर्शनशास्त्रस्य कृते PHILOSOPHY इति पदस्य प्रयोगं कुर्वन्ति। ज्ञानानुरागार्थेऽस्य प्रयोगस्तत्र प्रथितो वर्तते। यूनानदेशे 'फिलॉसफी' इति पदस्य इदम्प्रथमतया प्रयोगः 'पाइथोगोरस' महोदयेन विहितः। प्लेटोमहोदयेन दर्शनस्य प्रयोगः अनुशासनरूपेण (As a Discipline) विज्ञानरूपेण च कृतः।

भारते 'दृश्यते ह्यनेनेति दर्शनम्' इति व्युत्पत्तिः दर्शनस्य विधीयते। दृशिर्प्रेक्षणे धातोः भावार्थे 'ल्युट् च' इति पाणिनीयसूत्रेण ल्युट् प्रत्यये सति दर्शनमिति पदं सिद्ध्यति। अस्यार्थो भवति दर्शनं दृष्टिविषयकरणं वेति। येन ज्ञानप्राप्तिर्भवति तद्दर्शनमिति। दृश्यते साक्षात्क्रियते परमात्मादि येन तद्दर्शनमिति। भारते दर्शनानाम् आस्तिकतायाः नास्तिकतायाः विचारोऽतिप्रसिद्धो वर्तते। तद्यथा-

**अस्ति वेदादितो लोको मतिर्येषां त आस्तिकाः।**

**नास्ति वेदादितो लोको मतिर्येषां त एव ते॥** [2]

अर्थात् वेदैः प्रतिपादितं सिद्धान्तं ये स्वीकुर्वन्ति ते हि आस्तिकाः कथ्यन्ते। ये नैव मन्वते ते हि नास्तिकाः इति शास्त्रेषु गीयन्ते। ये हि वेदं ब्रह्मप्रोक्तं स्वतः प्रामाण्यं मन्वते, तत्र श्रद्धां विदधति, ते हि आस्तिकाः इतरे तु नास्तिका इति।

गौतमकणादकपिलपतञ्जलिजैमिनिवादरायणापरपर्यायव्यासदेवा इति षडेवास्तिका दार्शनिकाः सन्तीति। विषयेऽस्मिन् मतभेदो बहुधाऽवलोक्यते आचार्याणाम्। परं प्रचलितक्रमानुरोधेन षडेव आस्तिकदर्शनानि। न्यायवैशेषिक-सांख्ययोग-मीमांसा-वेदान्तेति नामभिः आस्तिकदर्शनानि षड्धा विभज्यन्ते। क्रमेणैतेषां प्रवर्तकाः गौतम-कणाद-कपिल-पतञ्जलि-जैमिनि-वेदव्यासभगवदंशविशेषाः महर्षयः स्वीक्रियन्ते।

परमात्मा योगशक्त्या स्वमायया इमां सृष्टिं व्यरचयत्। परमात्मनः इयं योगशक्तिः शाश्वतिकी नाम। यद्यपि सांख्ययोगमते प्रकृतिपुरुषयोः संयोगेन सृष्टिः सञ्जायते, किन्तु श्रुतिस्मृतिपुराणादिमतानुसारेण परमात्मैव सृष्टेः निमित्तोपादानकारणम्। योगस्य आदिवक्ता हिरण्यगर्भ इति महर्षिव्यासवचनम्।[3]

अयं हि हिरण्यगर्भः कः आसीत्? इत्यत्र नैकमत्यं इतिहासकर्तॄणाम्। श्रीमद्भगवद्गीतायामस्य दृढा स्पष्टा च परम्परा लभ्यते-

**इमं विवस्वते योगं प्रोक्तवानहमव्ययम्।**

**विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्॥[4]**

तद्वचनानुसारेण भगवता विवस्वते सूर्याय अयमव्यययोगः प्रथममुपदिष्टः। विवस्वतो मनुना प्राप्तः। मनुः इक्ष्वाकवे इममब्रवीत्। अयं राजर्षिष्वासीदितीति ज्ञायते। किन्तु कालेन योगो नष्टोऽभवत्। स च योगः भगवता पुनः अर्जुनं प्रति उपदिष्टः। उपनिषत्सु इतरयोगग्रन्थेषु च भगवता सदाशिवेन ब्रह्मादिदेवेभ्यः पार्वत्यै च योगोपदेशस्य प्रमाणं लभ्यते।

महर्षिपतञ्जलिना 'अथ योगानुशासनम्' इत्यनेन योगस्य गुरुपम्पराया: परिचयो दत्तः। महर्षिः पतञ्जलिः योगसूत्रे योगसिद्धान्तान् सूत्रेषु निर्बध्य योगपरम्परां दृढाम् अक्षुण्णां च कृतवान्। योगपरम्परा हि आगमनिगमभेदेन धाराद्वयेन प्रवाहिता आसीत्। आगमपरम्परायाः प्रवर्तको भगवान् सदाशिव आसीत्। इयं धारा हठयोग-तन्त्रयोग-पाशुपतयोग-सिद्धयोगनाम्ना प्रवाहिताऽभूत्। अस्यां नाथसम्प्रदायस्य प्रचलनं प्रवर्तते। यस्यां मत्स्येन्द्रनाथः गौरक्षनाथप्रभृतयश्च चतुरशीतिसङ्ख्याकाः योगिनो बभूवुः। निगममार्गो हि वेदप्रतिपादितः मार्गः। उपनिषत्सु योगस्य कृते अध्यात्मविद्या पराविद्या प्रभृतिशब्दाः प्रयुज्यन्ते। योगशब्दस्य स्पष्टतरः प्रयोग आधिक्येन श्वेताश्वरोपनिषदि लभ्यते। प्राचीनकालादेव कोऽधिकारी कश्च अनधिकारीत्युभयोः विशिष्टविचारो विहितः। अस्मादेव कारणात् अधिकृतताभावात् एषा योगपरम्परा विच्छिन्ना जाता। वेदेषु, उपनिषत्सु, महाभारते पुराणेषु च योगविद्यायाः प्रभावो दरीदृश्यते।

**शिक्षामनोविज्ञानम्**

शिक्षामनोविज्ञानं मनोविज्ञानशास्त्रस्यान्यतमा शाखा वर्तते। एतस्यां सामान्यमनोविज्ञानस्य सिद्धान्ता एव प्रयुज्यन्ते। शैक्षणिकदशासु मानवानां व्यवहारस्याध्ययनं शिक्षामनोविज्ञाने विधीयते। विद्यालयपरिवेशो बालकानां व्यवहारं कथं प्रभावयतीति विचारयति शिक्षामनोविज्ञानम्। अधिगमस्य कृते समीचीनाः परिस्थितयः कथमुत्पाद्यन्ते? एकस्यां शैक्षणिकपरिस्थितावपि केषाञ्चन बालानामाचरणं कथमन्यथा जायते? कीदृशं शिक्षणं रुचिकरं स्यात्? का नाम पाठ्यचर्या छात्राणां कृते हितकारिणी? शैक्षणिकपरिस्थितौ व्यक्तित्वगुणानां विकासाः कथं भवन्ति? एते प्रश्नाः भवन्ति शिक्षामनोविज्ञानशास्त्रस्य कृते।

अध्यापनमध्ययनञ्चोभयमेव समीचीनं क्रियते शिक्षामनोविज्ञानशास्त्रेण। शास्त्रेऽस्मिन् बालानां विद्यावगमनशक्तेर्विकासस्य यत्नो विधीयते। शास्त्रमिदं शिक्षाकाणां कृते शिक्षणसिद्धान्तान् प्रदर्श्य तदनुसारेण शिक्षणं विधातुं तान् प्रेरयति। एतच्छास्त्रं बुद्धिपरीक्षणमुपलब्धिपरीक्षणादिकञ्च विधाय

विद्यालये वर्तमानान् विविधबुद्धिस्तरयुतान् बालान् अध्यापयितुं शिक्षकमुपकरोति। मन्दमतियुतानां बालकानां शिक्षणाय अपि शिक्षकान् योजयति। बालानां चिन्तनमननादिशक्तीनां विकासार्थमपि शिक्षामनोविज्ञानं साहाय्यमाचरति।

सरलं कठिनं वा पाठ्यविषयं सहजतया, सरसतया चाध्यापयितुं ज्ञानं शिक्षामनोविज्ञानशास्त्रं न केवलं सामान्यमनोविज्ञानस्य सिद्धान्तान् शिक्षाक्षेत्रे उपयुङ्क्ते प्रत्युत स्वयमपि काश्चन सिद्धान्तान् प्रवर्त्य मनोविज्ञानशास्त्रस्य कलेवरं वर्धयति। शिक्षायाः ये सन्ति पक्षाः, शिक्षामनोविज्ञानं नूनमेव स्वकीयं योगदानं तेषां समीकरणाय प्रददाति।

शिक्षामनोविज्ञानस्य ज्ञाता शिक्षक एव शिक्षणसिद्धान्तान् सम्यगवगत्य कक्ष्यायाः शिक्षणे शक्तो जायते। एतादृश एव शिक्षकश्छात्रेषु लोकप्रियो भवितुमर्हति। स शिक्षकः कक्ष्याया आभ्यन्तरेऽनुशासनमपि स्थापयितुं समर्थो जायते। अयमेव शिक्षको मन्दगत्याधिगन्तॄणां समस्याग्रस्तानाञ्च बालकानां समुचितरीत्या शिक्षणे प्रभुर्भवति। स तु बालकानां दुष्प्रवृत्तीरपाकृत्य सदाचरणविकासे समर्थो भवति।

शिक्षामनोविज्ञाने शैक्षणिकपरिस्थितिषु प्राणिनां मुख्यतो मानवानां व्यवहारस्याध्ययनं विधीयते। एतदध्ययनम् अनेकैः विधिभिः सम्पाद्यते। यथा क्रेतुर्विक्रेतुश्च समाहारेण व्यापारो भवति, तथैव शिक्षकशिक्षार्थिनोः सहयोगेन शैक्षणिकप्रक्रिया प्रचलति। शिक्षामनोविज्ञानस्य सम्बन्धः शिक्षकेण, शिक्षार्थिना शिक्षणप्रक्रियया च वर्तते। शिक्षामनोविज्ञाने प्रामुख्येण शिक्षार्थिनां बुद्धितत्त्वस्य, मनस्तत्त्वस्य व्यक्तित्वस्य च विषये विचारो विधीयते। योगदर्शने बुद्धिप्रभृतितत्त्वसन्दर्भे कृतं विवरणम् अत्र प्रस्तूयते।

**बुद्धिः**

योगग्रन्थेषु बुद्धिः 'प्रज्ञा' इति कथ्यते। तत्र योगाभ्यासप्रसङ्गे एकस्मिन् सूत्रे प्रज्ञायाः विवरणं प्राप्यते। **'श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्'**[5] इति। अर्थात् ये योगिनः श्रद्धाशक्तिस्मृतिसमाधि-ऋतम्भराप्रज्ञाभिः युक्ताः भूत्वा अभ्यासं कुर्वन्ति ते निस्सन्देहमग्रे सरन्तीति। अत्र उक्तमस्ति यत् योगी मोक्षभावनया चित्तं प्रसादयन्, वीर्यमर्थात् ब्रह्मचर्यं पालयन्, स्मृतिः अर्थात् अभिलषिततत्त्वं स्मरन् समाधिस्तरं प्राप्नोति, तदा स ज्ञानस्य पूर्णस्थिरतायै प्रयतन् परवैराग्यस्य उत्कृष्टकोटिं प्राप्य ऋतम्भराप्रज्ञायाः स्तरं प्राप्नोति।

यदा आत्मनि क्लेशानां संस्काराः न तिष्ठन्ति तदा स ऋतम्भराप्रज्ञायां स्थिरो भूत्वा मोक्षपदं प्राप्नोति। अन्यस्मिन् सूत्रे कथितमस्ति यत्-

**'तस्य सप्तधा प्रान्तभूमिप्रज्ञा'**[6] इति।

तस्य विवेकख्यातिं प्राप्तस्य योगिनः सप्तप्रकारा प्रकृष्टरूपेण अन्तिमावस्था सर्वोत्कृष्टप्रज्ञा भवति। इत्थं स्पष्टमस्ति यत् 'महत्' बुद्धेः पर्यायः अस्ति। बुद्धिः निश्चयः निर्णयः इत्यादिमानसिकक्रियाणां स्रोतोभूता अस्ति। किं करणीयं किमकरणीयमिति निर्णयः व्यक्तिः बुद्धेः विवेकेन करोति। योगदर्शने प्रयुक्ता प्रज्ञा बुद्धेः शुद्धतमं रूपमस्ति। बुद्धिस्तु काम-क्रोध-लोभ-मोहादिभ्यः प्रभाविता भवितुं शक्नोति।

परन्तु प्रज्ञायां स्थिरता भवति, सा सदैव सत्यमनुसरति। अत एव योगसूत्रे प्रज्ञासन्दर्भे ऋतम्भराप्रज्ञाया: विवेचन सञ्जातमस्ति। वर्तमानसन्दर्भे शिक्षामनोविज्ञानशास्त्रे बुद्धेः उत्कृष्टताप्राप्तये योगसूत्रे निहितं प्रज्ञासम्बद्ध ज्ञान प्रयोक्तु शक्यते।

योगदर्शने प्रज्ञा हि वासनाकामनानां प्रभावात् विमुक्ता भवति। सा तु निरन्तरमीश्वरलीना भवति। प्रज्ञां सुखदु:खानि न प्रभावयन्ति। प्रज्ञा तृष्णा-क्रोध-भयेभ्य: मुक्ता तिष्ठति। एवं स्पष्टमस्ति यत् शिक्षामनोविज्ञानस्य सामान्यबुद्धेः तुलनायां प्रज्ञा सत्यनिष्ठा, ईश्वरप्रेम्णा ओतप्रोता, सर्वविधमलिनदुष्टप्रवृत्तिभ्य: मुक्ता निर्मला बुद्धिः अस्तीति।

**मन:**

योगस्य प्रधानं सूत्रं हि मनोविज्ञानस्य मनस्तत्त्वस्य व्याख्यां विदधति। तद्यथा-

**'योगश्चित्तवृत्तिनिरोध:'**[7] इति।

अर्थात् चित्तस्य (मनस:) वृत्तीनां निरोध एव योगो भवति। चित्तं, मन: अन्त:करणं च प्राय: समानार्थका: शब्दा: मन्यन्ते, ये हि विविधै: दार्शनिकै: विविधरूपेण व्याख्यायन्ते। मनस: चञ्चलता जगत्प्रसिद्धा अस्ति। संसारस्य सर्वकार्येषु मनस: स्थिरता एव सफलताया: कारणमस्ति। योगशास्त्रं चित्तवृत्तीनां स्वरूपं धर्मान् च तासां निरोधमधिकृत्य प्रवर्तते। अत्र मनस: नानाभूमय: स्तरा: वा सन्ति। योगदर्शनस्य मनस्तत्त्वस्य निरूपणं फ्रायडमहोदयस्य मनोविश्लेषणसिद्धान्तमतिशेते।

**व्यक्तित्वम्**

योगदर्शनमते मनसि प्रवहमाणविचाराणां मनसि विद्यमानानां संस्काराणां तद्गुणविशिष्टं व्यक्तित्वं भवितुमर्हति। चित्तं सत्त्वरजस्तमोगुणात्मकं त्रिगुणं किञ्च क्षिप्रपरिणामी चलञ्च वर्तते। अत: तत्प्रभावेण मनोवाक्कायै: जायमानक्रियाकलापै: मनुजस्य व्यक्तित्वमभिव्यज्यते। चित्तं क्षिप्रपरिणामी चलं च भवति। अत: चित्तावलम्बितं व्यक्तित्वमपि स्थिरं भवितुं नार्हति।

चित्तस्य प्रमुखा: पञ्चभूमय: सन्ति। व्युत्थानचित्ते क्षिप्तभूमि:, मूढभूमि:, विक्षिप्तभूमि: इति तिस्रो भूमय: सन्ति। तद् तद्भूमियुक्तं चित्तस्थव्यक्तित्वं तस्य मनुष्यस्य व्यक्तित्वं भवितुमर्हति। समाहितचित्तयुतो योगी कथमनुभवति कथमात्मानं मनुते किं गुणविशिष्टं तस्य व्यक्तित्वं भवति।

योगदर्शनं बालकस्य शारीरिक-मानसिक-सांवेगिकविकाससन्दर्भे 'अष्टाङ्गानां' निरूपणं करोति। एतेन स्वस्थमानवनिर्माणे स्वयोगदानं ददाति। 'स्वस्थशरीर एव स्वस्थमस्तिष्कस्य निर्माणं भवति' इति सिद्धान्तानुसारेण योग: सम्पूर्णस्वास्थ्यस्यावधारणां प्रस्तुतीकृत्य वर्तमानशिक्षाप्रणाल्यां बालकस्य सामाजिकस्य आत्मिकस्य चोन्नतेः मार्गं प्रशस्यति।

अनेन सुस्पष्टं भवति यत् वर्तमानशिक्षाप्रणाल्यां उदात्तव्यक्तित्वविकासाय भारतीयमूल्यसम्बद्धां शिक्षां प्राप्तये च योगदर्शने निहितानां बुद्धि-मन-व्यक्तित्वसम्बद्धसिद्धान्तानां ज्ञानं शिक्षामनोज्ञानं नूनं सकारात्मकरूपेण प्रभावयति।

भारतीयदर्शनस्य व्यावहारिकपक्षं स्पष्टयितुं एवञ्च मानवोन्नतये प्रायोगिकमार्गं निर्देष्टुं योगदर्शनमस्ति। शिक्षामनोविज्ञाने प्रमुख्येन बुद्धितत्त्वस्य मनस्तत्त्वस्य व्यक्तित्वतत्त्वस्य च विषद्विवेचनं विधीयते। पाश्चात्त्यैः कृतात् विश्वेषणात् योगदर्शनस्य विश्लेषणं महत्तरं प्रतीयते। योगदर्शनस्य विश्लेषणानां समावेशेन शिक्षामनोविज्ञानस्य प्रख्यातं बुद्धितत्त्वं मनस्तत्त्वं व्यक्तित्वतत्त्वञ्चेति सुस्पष्टं भवितुमर्हति। भारतीय-दर्शनस्यावदानं शिक्षामनोविज्ञानेन नूनमेव स्वीकरणीयम्। शिक्षामनोविज्ञानस्य तत्त्वानां सम्प्रत्ययावगमने सौकर्याय योगशास्त्रस्य सिद्धान्तानां समावेशोऽपरिहार्य एव।

## सन्दर्भाः-

1. महाभारतम्, शान्तिपर्व 232/24
2. सर्वदर्शनसमन्वयः, पृ. 3
3. हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः। महाभारतम्, 12/349/63
4. श्रीमद्भगवद्गीता 4/1
5. योगसूत्रम् , 20
6. योगसूत्रम् , 27
7. योगसूत्रम् , 2

## सन्दर्भग्रन्थसूची


1 आत्रेय, शान्तिप्रकाश; योग मनोविज्ञान, दि इण्टरनेशनल स्टैण्डर्ड पब्लिकेशन, वाराणसी, 1965

2 आरण्य, हरिहरानन्द; पातञ्जल योग दर्शन, मोतीलाल बनारसीदास, दिल्ली, 2017

3 आर्य, सतीश; व्यासभाष्य (पातञ्जल योगदर्शन), वेद योग चेरीटेबल ट्रस्ट, पश्चिमपुरी, नई दिल्ली, 2016

4 सोती, शिवेन्द्र; मानव व्यक्तित्व : अवधारणाएँ एवं सिद्धान्त, कनिष्क पब्लिशर्स, नई दिल्ली, 1998

5 मंगल, एस.के.; योग शिक्षा, आर्य बुक डिपो, दिल्ली, 2005

6 मिश्र, लोकमान्य; आधुनिकं शिक्षामनोविज्ञानम्, मृगाक्षी प्रकाशन, लखनऊ, 2011

7 शर्मा, चन्द्रधर:; भारतीय दर्शन, मोतीलाल बनारसीदास, दिल्ली, 1998

8 सिलोड़ी, महेशप्रसाद:; योगामृतम्, मान्यता प्रकाशन, मायापुरी, नई दिल्ली, 2008

9 सुलेमान मुहम्मद; उच्चतर शिक्षा मनोविज्ञान, मोतीलाल बनारसीदास, दिल्ली, 2010



- आचार्योऽध्यक्षः-शिक्षाशास्त्रविभागः,

राष्ट्रियसंस्कृतसंस्थानम्,

लखनऊपरिसरः

# योगवासिष्ठोद्दिष्टः अद्वैतवादः

- प्रो. एम्. चन्द्रशेखरः

"व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे।

नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः॥"

आदिकविमहर्षिवाल्मीकिना विरचितं श्रीमद्रामायणमहाकाव्यं लोके सुप्रसिद्धं चकास्ति। तत्र तावदस्ति रामायणस्य पूर्वरामायणम् उत्तररामायणं चेति भागद्वयमिति विदितमेव समेषाम्। तत्र पूर्वरामायणम् आत्मज्ञानोपदेशपरम्, श्रीमद्वसिष्ठरामचन्द्रसंवादरूपेण योगवासिष्ठसंज्ञया उत्तररामायणं च प्रसिद्धिमलभत इति विदितचरमेव।

योगवासिष्ठे अद्वैतसरणिमुपजीव्य सिद्धान्ताः सर्वैः प्रतिपादिताः। विशिष्य वेदविभागकर्त्रा महर्षिणा कृष्णद्वैपायनेन ब्रह्मसूत्रं विरच्य श्रुतितात्पर्यनिर्णयमुखेन विपक्षमतखण्डनपुरःसरम् अद्वैतमतवादः प्रतिष्ठापित इति सुविदितं तत्र भवतां विदुषाम्। किन्तु, नारायणावतारात् सत्यवती सुतात् प्रागपि अद्वैतवादः महर्षीणां चित्तेषु समधिरूढ इति योगवासिष्ठरामायणपर्यालोचनया परिज्ञातुं शक्यते।

आदिकविः वाल्मीकिमहर्षिः कृष्णद्वैपायनादपि प्राचीन इत्यत्र नास्ति सन्देहावकाशः। महर्षिणा कृष्णद्वैपायनेन प्रणीतेषु भारतरत्नभूतेषु महाभारतग्रन्थेषु रामायणवृत्तान्तस्तु सुज्ञातः तथा च वनपर्वे अष्टाविंशत्यधिकद्विशततमे अध्याये मार्कण्डेययुधिष्ठिरसंवादे रामायणवर्णनं तावत् स्पष्टमेवावलोक्यते। अतो वेदव्यासादपि सुप्राचीनतमेन महर्षिवाल्मीकिना अद्वैतवादः व्याख्यात इति सम्यक् अवधार्यते।

प्राचीनकालादारभ्य सर्वथा एकरूपत्वं वैलक्षण्यं वा अद्वैतवादस्य यत्किञ्चित् परिलक्ष्यते तदेवात्र यथामति विवक्ष्यते। तथाहि, अद्वैतवादस्य कस्तावदर्थः इति विचार्यमाणे- न द्वैतम् अद्वैतम्, नञः निषेधार्थे एव प्रयोगात् द्वैतनिषेधपूर्वकम् अद्वैततत्त्वस्थापनमभीप्सितम्। द्वैतत्वञ्च सजातीयविजातीयस्वगतभेदात्मकं त्रिविधं सम्भवति। अत्र सामान्यतः द्वैतनिषेध एव अद्वैतपदस्य स्वारसिकोऽर्थः इति श्रुतिस्मृतिपर्यालोचनया पर्यवस्यति। ततश्च सजातीयविजातीयस्वगतभेदशून्यम- द्वैततत्त्वमिह वर्ण्यत इति अद्वैतवादस्य फलितोऽर्थः। तथा च सत्स्वपि विशिष्टाद्वैतशुद्धाद्वैतद्वैताद्वैत- विविधमतपरेषुदर्शनेषु आचार्यशङ्करभगवत्पादकृतव्याख्यानमुखेन प्रतिष्ठितः अद्वैतवाद एव अद्वैतशब्दस्य मुख्यार्थ इति तु निर्विवादम्।

तथाहि **अथातो ब्रह्मजिज्ञासा** (ब्र.सू. 1-1-1) इति वेदान्तदर्शनस्य आदिसूत्रेण मुमुक्षोः ब्रह्मजिज्ञासा उपदिष्टा। मोक्षश्च बन्धहेत्वज्ञानध्वंसात्मकः तस्य साधकं ब्रह्मज्ञानम्। अत एव अविद्यानिवृत्तिरेव मोक्षः इति वेदान्तसिद्धान्तः सुतरां सङ्गच्छते। अतः अहं प्रत्ययगोचरस्य ब्रह्मणो निश्चितत्वेपि ब्रह्मणि कर्तृत्वभोक्तृत्वाद्यध्यासं विना जिज्ञासानुपपत्तेः जिज्ञासापदेनैव ब्रह्मणि जगदध्यासः सूचित इति।

तस्मादेव क्रियाकारकादिफललक्षणभेदभिन्नस्य नामरूपव्याकृतस्य प्रपञ्चस्य मिथ्यात्वं श्रुतिस्मृतिप्रसिद्धं श्रीमच्छङ्कराचार्यपादैः युक्त्या व्यवस्थापितम्। अत एव प्रपञ्चो मिथ्या इति शाङ्करसिद्धान्तः। महर्षिवाल्मीकिनापि प्रपञ्चस्य मिथ्यात्वमेवोपवर्णितम्। तथाहि-

**''भ्रमस्य जगतस्यास्य जातस्याकाशवर्णवत्।**

**अपुनः स्मरणं मन्ये साधो विस्मरणं वरम्॥''** (यो. वा. 1/3/2)

**''जगद् भ्रमोऽयं दृश्योऽपि नास्त्येवेत्यनुभूयते।**

**वर्णो व्योम्न इवाखेदाद्विचारेणामुनाऽनघम्॥''** (यो.वा. 1/3/4)

**यदिदं दृश्यते सर्वं जगत् स्थावरजङ्गमम्।**

**तत्सुषुप्ताविव स्वप्नः कल्पान्ते प्रविनश्यति॥** (यो.वा. 3/1/10)

श्रीमच्छशङ्कराचार्यैः च एतद् एवं प्रपञ्चितम्- ''तस्माद् यथा घटकरकाद्याकाशानां महाकाशादनन्यत्वं, यथा च मृगतृष्णिकोदकादीनामूषरादिभ्योऽनन्यत्वं दृष्टनष्टस्वरूपत्वात्, स्वरूपेण त्वनुपाख्यत्वात् एवमस्य भोग्यभोक्तृत्वादिप्रपञ्चजातस्य ब्रह्मव्यतिरेकेणाभाव इति द्रष्टव्यम्''। (शा.भा. 2/1/24)

ननु प्रत्यक्षतो दृश्यमानस्य जगतः मिथ्यात्वं कथं सम्भवतीति चेत् तत्रोच्यते- मिथ्यात्वमिह अतस्मिंस्तद्बुद्धिरूपम्। तथाहि अनाद्यनिर्वचनीयमायाशक्तिबलात् यथा शुक्तौ रजतभ्रमः यथा वा मरुमरीचिषु तोयविभ्रमः, एवमिहापि युष्मदस्मत् प्रत्ययगोचरयोर्विषयविषयिणोस्तमः प्रकाशव- द्विरुद्धस्वभावयोः अन्योन्यस्मिन् अन्योन्यात्मकतामन्योन्यधर्माश्चाध्यस्य मिथ्याज्ञाननिमित्तः लोकव्यवहारः प्रचलितः।

एतद् आदिकविवाल्मीकिनापि समर्थितम्। तथा चोक्तम्-

**''सती वाप्यसती तापनद्येव लहरीचला।**

**मनसेहेन्द्रजालश्रीर्जागती प्रवितन्यते॥''** (यो.वा. 3/1/16)

किञ्च, **नेह नानास्ति किञ्चन** (बृह. 4-4-19) इत्यादि श्रुतिवचनात् ब्रह्मसत्तातिरिक्तसत्ताऽनङ्गीकारात् ब्रह्मैव केवलं पारमार्थिकं सत् इति निश्चीयते। वस्तुतः जगदपि यत् ब्रह्मसत्त्वमेव प्रकाशितं भवेत्, किन्तु अविद्यापरिकल्पितनामरूपाभ्यां तत् सत्त्वं प्रकाशमानम् प्रतीयते, तत्रापि ब्रह्मसत्त्वमेव प्रकाशितं भवेत्, किन्तु अविद्यापरिकल्पितनामरूपाभ्यां तत् सत्त्वं प्रकाशमानम् प्रतीयते, तत्रापि ब्रह्मसत्त्वमेव एकमपि अनेकमिव, अद्वितीयमपि सद्वितीयमेव, निरूपाधिकमपि सोपाधिकमिव च प्रतीयते। अयमेव भ्रमः। तथा च सूत्रम्-

**''तदनन्यत्वमारम्भणशब्दादिभ्यः''**। (ब्र.सू. 2-1-14)

तथा च महर्षिणा वाल्मीकिनापि दृश्यमानस्य प्रपञ्चस्य ब्रह्मोत्पन्नत्वात् ब्रह्मणि एव लयप्रतिपादनात् च ब्रह्मसत्तया एव जगतः सत्ता अङ्गीकृता। यथोक्तम्-

द्वितीया कल्पनैवेह न रघूद्वह विद्यते।

**ब्रह्ममात्रादृते वह्नावौष्ण्यमात्रादृते यथा।।** (यो. वा. 4/39/15)

एवञ्च कारणसत्तातिरिक्तसत्ताशून्यत्वात् कार्याणां ब्रह्मोपादानकस्य जगतः ब्रह्मसत्तातिरिक्तसत्ताशून्यत्वं शाङ्करमते योगवासिष्ठमते च तुल्यमेव। यथोक्तम्-

**''सर्वस्मात् सर्वगतात्तस्मादनन्ताद् ब्रह्मणः पदात्।**

**नान्यत् किञ्चित् सम्भवति तदुत्थं तदेव तत्।।**

**ब्रह्मतत्वं विना नेह किञ्चिदेवोपपद्यते।**

**सर्वं च खल्विदं ब्रह्मेत्येषैव परमार्थता।।''** (यो.वा. 4/40/34-35)

अत्रेदं तात्पर्यम्- यत् यस्मादुत्तिष्ठति, यत् यस्मात् जायते, तदेव तद्वस्तु, कारणसत्तातिरिक्तसत्ताशून्यत्वात् कार्यस्येति यावत्। एवं बहुशः प्रतिपादितेऽपि उभयमतसाम्ये लक्ष्यते तावदत्र किञ्चित् वैलक्षण्यम्।

तथाहि जगतः ब्रह्मात्मकत्वं ब्रह्मसत्तातिरिक्तसत्ताशून्यत्वम् अङ्गीकृत्यापि तत्रभवता आदिकविवाल्मीकिना जगन्मिथ्यात्वप्रतिपादनावसरे कथञ्चित् भिन्नरीत्या मिथ्यात्वम् उपवर्णितम्। यथा-

**यथासङ्कल्पनगरं सङ्कल्पान्नैव भिद्यते।**

**तथायं जगदाभासः परमार्थान्न भिद्यते।।** (यो.वा. 6/41/20)

**यवा द्रवत्वं पयसि यथा शून्यत्वमम्बरे।**

**यथा प्रस्पन्दात् वायौ महाचिति तथा जगत्।।** (यो.वा. 6/42/6)

अत्र तावत् महर्षेः वाल्मीकेरयमाशयः- ''चित्तसङ्कल्पितं नामरूपव्याकृतं सर्वं जगत् तदैक्षतेत्यादि श्रुतेः। सङ्कल्पश्च चित्तेन विना नैव संभवतीति चित्तोपादानकः सङ्कल्पः। सङ्कल्पस्थले तु सङ्कल्पसङ्कल्पितयोर्मध्ये भेदो नास्त्येव इति प्रोक्तं वाल्मिकिना। एवञ्च सति सङ्कल्पितानां जगतां सङ्कल्पाव्यतिरिक्ततया सङ्कल्प एव जगत्। तथा च सङ्कल्पसत्तातिरिक्तसत्ताशून्यं जगत्। सङ्कल्पश्च यस्य चित्तस्य कार्यं तच्चित्तं सङ्कल्पस्य एव सूक्ष्मावस्थम्। तदेव अव्याकृतं नामरूपात्मकम्।

यद्येवमस्ति तर्हि एतत् पुनः साङ्ख्योक्तप्रधानसाम्यतां लब्धुमर्हति। तत्रापि साङ्ख्यनये प्रकृतेः सत्त्वरजस्तमसां साम्यावस्थात्वेन अव्याकृतं कार्यस्वरूपमेव तत्। अत एव अव्यक्तमिति प्रधानस्य संज्ञा व्यपदिश्यते, किन्तु विना व्यक्तावस्थां कार्यत्वं तस्य नोचितमिति केवलं कारणमेव। अत्रापि सङ्कल्पितानां नामरूपव्याकृतानां सूक्ष्मावस्थं सङ्कल्पोपादानम् इति कथनात् प्रायः साङ्ख्यसिद्धान्तच्छायाम् अनुगृह्णाति।

न च पुनः साङ्ख्यसिद्धान्ततः परिणामवाद एव महर्षिणा परिगृहीत इति साम्प्रतं परिणामवादे कार्यस्य जगतः मिथ्याङ्गीकारात्। यथा चित्तं सङ्कल्पोपादानकमव्याकृतं सङ्कल्पितस्वरूपमस्ति तदपि ब्रह्मोत्थम्। अत एवोक्तम्- 'तदुत्थं च जगत् सर्वम्' इति।

एवञ्च सति कार्यकारणयोः भेदाभ्युपगमे ब्रह्मतत्कार्यचित्तयोरपि भेदानभ्युपगमात् सुतरामद्वैतवादः निर्दिष्ट एव।

किञ्च **"नेह नानास्ति किञ्चन"**, (बृह. 4/4/19) **अथात आदेशो नेति नेति** (बृह. 2/3/6) इति श्रुतिभिः निषेधमुखेन ब्रह्मणः निर्देशः यः लक्ष्यते, महर्षि वाल्मीकिना तु तदपि नैव समर्थितम्। तथा च योगवासिष्ठे-

**नेदं नेदमिति व्यर्थप्रलापैर्नोपशाम्यति।**

**सङ्कल्पजनकैर्दृश्यव्याधिः प्रत्युत वर्धते॥** (यो.वा. 3/1/24)

अपि च, जगन्मिथ्यात्वकारणीभूतायाः अविद्यायाः स्वरूपविषये अपि अस्ति महद्वैषम्यम्। यथा हि, या नाम सदसद्भ्याम् अनिर्वाच्या- अविद्या मायाख्या आचार्यपादैः स्वीकृता, तत्रापि महर्षिपादानां किञ्चित् वैलक्षण्यमिव प्रतीयते। यथोक्तम्-

**सा राम प्रकृतिः प्रोक्ता शिवेच्छा परमेश्वरी।**

**जगन्मायेति विख्याता स्पन्दनशक्तिरकृत्रिमा॥** (यो. वा. 6/85/14-15)

एतेन एकस्यैव तत्त्वस्य पुरुषप्रकृतिभेदेन द्वैविध्यं सृष्टिदशायां स्वीकृतम्। नेदं साङ्ख्यमतं यतोहि, साङ्ख्यमते प्रकृतिपुरुषयोः भेदः पारमार्थिकः सार्वकालिकः च। वस्तुतः प्रलयदशायामेव प्रकृतिपुरुषयोः भेदस्य तत्र इष्टत्वात्, प्रत्युत महर्षिपादैस्तु केवलं सृष्टिदशायामेव प्रकृतिपुरुषभावेन द्वैधीभावः कल्पितः, न पुनः प्रलयदशायामपि द्वैविध्यं तत्राभिप्रेतम्।

शाङ्करमते तु सृष्टिदशायामपि ब्रह्म स्वरूपतः न प्रत्युतम् न वा द्वैधीभावः। महर्षिमते तु एकमेव तत्त्वं सृष्टिदशायां द्वैविध्यं भजत इति विशेषः।

एतदपि अत्रावधेयमस्ति यत्- यथा आचार्यशङ्करेण जगतः सदसद्भ्याम् अनिर्वचनीयं किमपि स्वरूपमङ्गीकृतम्, महर्षिणा तु तन्नाभिप्रेतम्। तत्र योगवासिष्ठे-

**यदिदं दृश्यतां यातं मानसं मननं महत्।**

**असन्मात्रमिदं यस्मान्मनोमात्रविजृम्भितम्॥** (यो. वा. 4/42/22)

एवञ्चात्र जगत् असदेव इति स्पष्टतयोल्लिखितम्।

अत एव योगवासिष्ठसिद्धान्तोद्दिष्टः अद्वैतवादः शाङ्करमताद्विशिष्ट इति शम्।

**ॐ शान्तिः शान्तिः शान्तिः**

आचार्यः-शिक्षाशास्त्रविभागः,
राष्ट्रियसंस्कृतसंस्थानम्,
लखनऊपरिसरः

# वर्णव्यवस्थितिरिहैव कुमारिकाख्ये

**प्रो. मदनमोहनपाठक:**

ज्योतिर्विज्ञानं सर्वज्ञानविज्ञानानां मूलमिति कथने नास्ति काचित् विप्रतिपत्तिः। अत्र ज्ञानं नाम सर्वमपि भौतिकं ज्ञानं, सामान्य ज्ञानमथवा ऐहिकं ज्ञानन्तथा विज्ञानं नाम सर्वमपि आध्यात्मिकं ज्ञानम् अवगन्तव्यम्। सूक्ष्मधिया विचार्यते तदा ज्योतिर्विज्ञाने उभयोर्ज्ञानविज्ञानयोर्मूलं सर्वत्रोपलभ्यते। यतः ज्योतिःशास्त्रमनेकभेदविषयमस्तीति उक्तमस्ति। तत्र सिद्धान्तसंहिता–होरेति त्रयः प्रमुखाः प्रभेदाः महर्षिनारदेन अङ्गीकृताः। सिद्धान्तस्कन्धे त्रुट्यादितः प्रलयान्तकालकलनं, कालमानं, कालप्रभेदः, द्युसदां चारः, व्यक्ताव्यक्तेति विविधं गणितं, सोत्तराः प्रश्नाः, भूधिष्ण्यग्रहसंस्थितेश्च कथनं, ग्रहांणां प्रत्यक्षावगमनार्थं विविध–यन्त्राणां वर्णनं सर्वेप्येते विषयाः समायान्ति। संहितायां दिव्यान्तरिक्षभौमविषयविशेषाः, ग्रहमाध्णां चाराः, व्यष्टि–समष्टिगत–जगतः शुभाशुभफलप्रतिपादनं, तथा होरायां जातकस्य जन्मकालिकी प्रश्नकालिकीञ्च ग्रहस्थितिमवलोक्य शुभाशुभफलप्रतिपादनस्य विधानं विस्तरेण वर्णितमस्ति।

सिद्धान्तस्कन्धे विविधप्रश्नोत्तरप्रतिपादनप्रसङ्गे जगतः समुत्पत्तेः वर्णनं समेषु प्रमाणिकसिद्धान्तग्रन्थेषु उपलभ्यते। तद्यथा सूर्यसिद्धान्ते

**वासुदेवः परं ब्रह्म तन्मूर्तिः पुरुषः परः।**
**अव्यक्तो निर्गुणः शान्तः पञ्चविंशात्परोऽव्ययः॥**
**प्रकृत्यन्तर्गतो देवो बहिरन्तश्च सर्वगः।**
**सङ्कर्षणोऽपः सृष्ट्वाऽदौ तासु वीर्यमवासृजत्॥**

– सूर्यसिद्धान्ते भूगोलाध्याये श्लोकसंख्या 12-13

अयं विषयः पुराणेष्वपि सर्वत्रोपलभ्यते। यतः पुराणस्य पञ्चलक्षणप्रतिपादनप्रसङ्गे सर्ग –(उत्पत्तिः नाम पञ्चमहाभूतइन्द्रियगण– बुद्धिप्रभृति– तत्त्वानामुत्पत्तिः) प्रतिसर्गयोः (ब्रह्मणः सृष्ट्यनन्तरं दक्षादीनां सृष्टिः) चर्चा प्रतिपुराणेषु प्राप्यते। तद्यथा–

**सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।**
**वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम्॥**

तत्र जगतः सृष्टिवर्णनप्रसङ्गे विष्णुपुराणस्य अयं श्लोकः सर्वजनविदित एव विद्यते। तद्यथा–

**नाहो न रात्रिन नभो न भूमिर्नासीत्तमोज्योतिरभूच्च नान्यत्।**
**श्रोत्रादिबुद्ध्यानुपलभ्यमेकं प्राधानिकं ब्रह्म पुमांस्तदासीत्॥** –विष्णुपुराणम्

अर्थात् सृष्टेः पूर्वं प्रलयावस्थायां न दिनमासीत् न रात्रिः, न नभो आसीत् न भूमिः, न तमः आसीत्, न ज्योतिः केवलं श्रोत्रादिबुद्ध्यानुपलभ्यमेकं प्राधानिकं ब्रह्म पुमांस्तदासीत्। विषयेऽस्मिन् श्रीमद्वाराहमिहिरोऽपि स्वीये बृहत्संहिताग्रन्थे लिखति–

आसीत्तमः किलेदं तत्रापां तैजसेऽभवत् हैमे।
स्वर्भूशकले ब्रमा विश्वकृदण्डेऽर्कशशिनयनः॥ - बृहत्संहिता-1/6

विषयेऽस्मिन् श्रीमद्भास्कराचार्योऽपि वदति

**यस्मात् क्षुब्धप्रकृतिपुरुषाभ्यां महानस्य गर्भेऽहंकारोऽभूत् खकशिखिजलोयघ्स्ततः संहतेश्च।**
**ब्रह्माण्डं यज्जठरगमहीपृष्ठनिष्ठाद्विरञ्चेविश्वं शश्वज्जयति परमं ब्रह्म तत् तत्त्वमाद्यम्॥**

- सिद्धान्तशिरोमणिः भुवनकोशः श्लोकसंख्या 1

**वासूदेवः परं ब्रह्म तन्मूर्तिः पुरुषः परः। अव्यक्तो निर्गुणः शान्तः पञ्चविंशात् परोऽव्ययः॥**
**प्रकृत्यन्तर्गतो देवो बहिरन्तश्च सर्वगः। सङ्कर्षणोऽपः सृष्ट्वादौ तासु वीर्यवासृजत्॥**
**तदण्डमभवद् हैमं सर्वत्र तमसावृतम्। तत्रानिरुद्धः प्रथमं व्यक्तीभूतः सनातनः॥**
**त्रयीमयोऽयं भगवान् कालात्मा कालविभुः। सर्वात्मा सर्वगः सूक्ष्मः सर्वमस्मिन् प्रतिष्ठितम्॥**
**अथ सृष्ट्यां मनश्चक्रे ब्रह्माऽहङ्कारमूर्तिभृत् । मनसश्चन्द्रमा जज्ञे सूर्योऽक्ष्णोस्तेजसां निधिः॥**
**मनसः खं ततो वायुरग्निरापो धरा क्रमात्। गुणैकवृद्धया पञ्चेति महाभूतानि जजिरे॥**
**ततश्चराचरं विश्वं निर्ममे देवपूर्वकम्। ऊर्ध्वमध्याधरेभ्योऽथ स्रोतोभ्यः प्रकृतीः सृजन् ॥**

- सूर्यसिद्धान्तः-सम्पादकः कपिलेश्वरशास्त्री-भूगोलाध्यायः श्लो.सं. १२-१४, १८, २२, २३,२६

ब्रह्मणा पञ्चमहाभूतसृष्टेरनन्तरं ग्रहक्षसहितस्य भचक्रस्य सृष्टिः जाता। तस्य याम्योत्तरदिशि ध्रुवतारकयोः स्थापना कृता। ध्रुवयोर्मध्ये पराशाभिमुखं (पश्चिमस्यां दिशि) शीघ्रतरगत्या भ्रमितुं सखेचर-भपञ्जरस्य निर्माणं कृतम्। पुनः तेन विपरीतदिशि अर्थात् पूर्वस्यां दिशि तस्मिन् भपञ्जरे एव नीचोच्चतरात्मवर्त्मसु स्व-स्वगत्या ग्रहान् भ्रमितुमादेशः प्रदतः। परिणामतः यावत् सृष्टिः स्थाष्यति तावत् इयं व्यवस्था स्थाष्यति। अद्यापि ग्रहाः स्व-स्व नीचोच्च-भ्रमणमार्गे भ्रमन्ति। तद्यथा-

**सृष्ट्वा भचक्र कमलोद्भवेन ग्रहैः सहैतद्भगणादिसंस्थैः ।**
**सश्वद्भमे विश्वसृजा नियुक्तं तदन्ततारे च तथा ध्रुवत्वे॥**
**ततोऽपराशाभिमुखं भपञ्जरे सखेचरे शीघ्रतरे भ्रमत्यपि।**
**तदल्पगत्येन्द्रदिशं नभश्चराश्चरन्ति नीचोच्चतरात्मवर्त्मसु॥**

- सि.शो. कालमानाध्यायः श्लो.सं. 13-14

अत्र भूकेन्द्राभिप्रायिकं समेषां ग्रहआणां अवस्थानं परिभ्रमणञ्च भवतीत्यपि अवधेयम्। सूर्यांशपुरुषानुसारं ब्रह्मणः सकाशात् आकाशतत्त्वस्योत्पत्तिः, आकाशात् वायुः, वायोः अग्निः, अग्नेः आपः, ततः अद्भ्यः धरायाः उत्पत्तिः सञ्जाता। तद्यथा-

**मनसः खं ततो वायुरग्निरापो धराक्रमात्। गुणैकवृद्धया पञ्चेति महाभूतानि जज्ञिरे॥**
**गुणकर्मविभागेन सृष्ट्वा प्राग्वदनुक्रमात्। विभागं कल्पयामास यथास्वं वेददर्शनात्॥**

- सूर्यसिद्धान्तः भूगोलाध्ये श्लो.सं. 23,27

एतानि पञ्चमहाभूतानि गुणैकवृद्धया निर्मितानि विद्यन्ते। यथा आकाशस्य मनसः समुत्पत्तिः जाता। अतः आकाशे शब्द एव एकः गुणः, उक्तमप्यस्ति शब्दगुणकमाकाशमिति। ततः आकाशात्

वायोः समुत्पत्तिः, अतः वायौ शब्द-स्पर्शौ द्वौ गुणौ विद्यते। वायोः अग्नेः समुत्पत्तिः सञ्जाता । अतः अग्नौ शब्द-स्पर्श-रूपमिति गुणत्रयं तिष्ठति। अग्नेः जलस्योत्पत्तिः सजाताः। अतः जले शब्द-स्पर्श-रूप-रसेति गुणचतुष्टयं वर्तते। अन्ते जलतत्त्वात् भुवः समुत्पत्तिः सजाता। अतः भूमौ शब्द-स्पर्श-रूप-रसगन्धेति पञ्चगुणाः वर्तन्ते। परमात्मनः सर्वोत्कृष्टा मानवी सृष्टिः वर्तते। अतः भूमावेव मानवानां सुखमयी स्थितिः सिद्धयति।

अयं मृदनिलसलिलव्योमतेजोमयः भूमेः पिण्डः शशङ्कज्ञकविरविकुजेज्यार्किनक्षत्रकक्षाभिरावृत्तो वर्तते। अपि चायं भूः आधाररहितः आकाशे स्वशकत्या अवस्थितोऽस्ति। तद्यथा-

**भूमेः पिण्डः शशाङ्कज्ञकविरविकुजेज्यर्किनक्षत्रकक्षा-**
**वृत्तैर्वृत्तो वृतः सन् मृदनिलसलिलव्योमतेजोमयोऽयम्॥**
**नान्याधारः स्वशक्त्यैव वियति नियतं तिष्ठतीहास्य पृष्ठे**
**निष्ठं विश्वञ्च शश्वत् सदनुजमनुजादित्यदैत्यं समन्तात्॥**
**सर्वतः पर्वतारामग्रामचौत्यचयैश्चितः।**
**कदम्बकुसुमग्रन्थिः केसरप्रसरैरिव॥** - सिद्धान्तशिरोमणिः-गोलाध्यायः भुवनकोशः श्लो.सं. 2-3

अयं भूगोलः नान्याधारः स्वशक्त्या एव वियति अर्थात् आकाशे स्थितोऽस्ति। भूपृष्ठोपरि एव समग्रं विश्वम् अवस्थितं विद्यते। अत्रैव सर्वेऽपि मानव-दानव-देवासुर-पर्वतोद्यान-ग्राम-देवस्थानादयः व्यवस्थिताः सन्ति। पृथिव्यां इदं समग्रं विश्वं तथैव राजते यथा कदम्बपुष्पग्रन्थिषु केसराः प्रसृताः दृश्यन्ते। यथा अर्क-अनलयोः उष्णता, विधौ अर्थात् चन्द्रमसि शीतता, जले गतिः, अश्मनि कठिनत्वं, वायौ चलत्वं विद्यते तथैव अयं भूः स्वभावतः अचला अर्थात् स्थिरा विद्यते। अस्यां भूमौ स्वकीया आकर्षणशक्तिः विद्यते। यया शक्त्या खस्थं गुरुपदार्थ स्वशक्त्या स्वाभिमुखं आकृष्यते। तद्यथा-

**यथोष्णतार्कानलयोश्च शीतता विधौ द्रुतिः के कठिनत्वमश्मनि।**
**मरुच्चलो भूरचला स्वाभावतो यतो विचित्रा वत वस्तुशक्तयः॥**
**आकृष्टशक्तिश्च मही तया यत् खस्थं गुरु स्वाभिमुखं स्वशक्त्या।**
**आकृष्यते तत् पततीव भाति समे समन्तात् क्व पतत्वियं खे॥**

- सिद्धान्तशिरोमणिः-गोलाध्यायः भुवनकोशः श्लो.सं. 5-6

अस्याः भूपरिधेः मानं भिन्न-भिन्नसिद्धान्तग्रन्थेषु भिन्नरूपेण प्रतिपादितं दृश्यते। तस्य कारणं सुस्पष्टमेव। प्राक्तनीय-परिमापकव्यवस्थायाः मूलाधारः अगुलात्मकमानम्। अङ्गुलेः परिमाणं यवोदरोपरि आधारितमासीत्। यवोदराणां स्वरूपेषु एकरूपतायाः अभावात् तद् द्वारा निर्धारितेषु परिमापेषु वैविध्यं स्वाभाविकमेव। अतः- यवोदरैरङ्गुलमष्टसंख्यैः इति लीलावत्यां भास्कारवचनात् यवस्य स्वरूप-परिमाणे वैविध्यात् भूपरिध्यादिपरिमाणेष्वपि वैविध्यं दृश्यते। प्रसङ्गादत्र भास्कराचार्योक्तं भूपरिधिमानं देशान्तरयोजनमानञ्च उच्यते-

**प्रोक्तो योजनसंख्यया कुपरिधिः सप्ताङ्गनन्दाब्धय-4967**
**स्तव्यासः कुभुजङ्गसायकभुवो 1581 ऽथ प्रोच्यते योजनम्।**

**याम्योदक्पुरयोः पलान्तरहतं भूवेष्टनं भांश 360 हृत्**
**तद्भक्तस्य पुरान्तराध्वन इह ज्ञेयं समं योजनम्॥**

– सिद्धान्तशिरोमणिः–गणिताध्याये भूपरिध्यायध्यायः श्लो.सं. 01

अर्थात् भास्कराचार्यमतानुसारं कुपरिधिः सप्ताङ्गनन्दाब्धिमितं 4967 योजनं विद्यते। अस्याः व्यासमानं 1581 योजनानि सन्ति। अस्मिन्नेव श्लोके द्वयोः पुरयोः (नगरयोः) अन्तरयोजन(देशान्तर)साधनप्रकारोऽपि प्रदर्शितो विद्यते। तद्यथायाम्योदक्पुरयोः पलान्तरं नाम अक्षांशयोरन्तरमवगम्य तेन (अक्षांशयोरन्तरफलेन) भूवेष्टनं नाम भूपरिधिः 4967 सप्ताङ्गनन्दाब्धिमिता गुण्यते, गुणनफले भांशैः 360 विभाज्यते तदा द्वयोः पुरयोः अन्तरयोजनं ज्ञायते।

अस्याः पृथिव्याः एकस्मात् स्थानात् अपरस्थानस्य स्थिति अवगमनाय भूमेः चत्वारः प्रभागाः कृताः विद्यन्ते। भूमध्ये लङ्कायाः स्थितिः, ततः पूर्वस्यां दिशि 90 अंशे यमकोटिः, 90 अंशे पश्चिमस्यां दिशि रोमकपत्तनम्, लङ्कातः साक्षात् अधोभागे 180 अंशे दूरे सिद्धपुरं, उत्तरस्यां दक्षिणस्याञ्च दिशि क्रमशः 90–90 अंशे दूरे सुमेरुः (उत्तरीध्रुवः) बडवानलः (दक्षिणीध्रुवः) अवस्थितो विद्यते। एतासां नगरीणामवस्थानविषये उक्तं यथा श्रीमद्भास्कराचार्येण–

**लङ्का कुमध्ये यमकोटिरस्याः प्राक् पश्चिमे रोमकपत्तनञ्च ।**
**अधस्ततः सिद्धपुरं सुमेरुः सौम्येऽथ याम्ये वडवानलश्च॥**

– सिद्धान्तशिरोमणिः–गोलाध्यायः भुवनकोशः श्लो.सं. 17

तत्र लङ्कायां यदा मध्याह्न भवति तदा तस्मात् पश्चिमस्थ–देशे रोमकपत्तने सूर्योदयो जायते, लङ्कातः पूर्वस्यां दिशि नवत्यंशान्तरिते देशे यमकोट्यां सूर्यास्तः तथा लङ्कातः भार्दधान्तरिते 180 डिग्री अन्तरिते देशे सिदधपुरीनगर्या मध्यरात्रिः भवति। प्रकारान्तरेण इत्थमपि अवगन्तुं शक्यते। तद्यथा–लङ्कायां यदा सूर्योदयो भवति तदा तस्मात् पश्चिमस्थ–देशे रोमकपत्तने मध्यरात्रिः, लङ्कातः पूर्वस्यां दिशि नवत्यंशान्तरिते देशे यमकोट्यां मध्याह्न, लङ्कातः भाद्धान्तरिते (180 डिग्री अन्तरिते देशे) सिद्धपुरीनगर्या सूर्यास्तो भवति। यथोक्तं श्रीमद्भास्कराचार्येण–

**लङ्कापुरेऽर्कस्य यदोदयः स्यात् तदा दिनाधं यमकोटिपुर्याम्।**
**अधस्तदा सिद्धपुरेऽस्तकालः स्याद्रोमके रात्रिदलं तदैव॥**
**यत्रोदितोऽर्कः किल तत्र पूर्वा तत्रापरा यत्र गतः प्रतिष्ठाम्।**
**तन्मत्स्यतोऽन्ये च ततोऽखिलानामुदक् स्थितो मेरुरिति प्रसिद्धम्॥**

– सिद्धान्तशिरोमणिः–गोलाध्यायः भुवनकोशः श्लो.सं. 44–45

पौराणिकाणां मतानुसारम् अस्यां पृथिव्यां सप्त–द्वीपाः व्यवस्थिताः विद्यन्ते। यथा कर्मकाण्डिनः कलशाधिष्ठातृदेवानां प्रार्थनायां पठन्ति। तद्यथा–

**कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रिताः। मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः।**
**कुक्षौ तु सागराः सर्वे सप्त द्वीपाः वसुन्धराः। ऋग्वेदो ययुर्वेदः सामवेदोऽह्यथर्वणः॥**
**अङ्गश्च सहिताः सर्वे कलशे तु समाश्रिताः। अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा॥**

इत्थं श्रीमद्भास्कराचार्येणापि गोलाध्यायस्य भुवनकोशे सप्त द्वीपानां वर्णनं कृतम्। भास्कराचार्यस्य मतानुसारं भुवः उत्तरार्द्धे भागे यः क्षारसिन्धुः वर्तते, तस्मात् क्षारसिन्धोः उत्तरार्दधे भागे जम्बूद्वीपः व्यवस्थितोऽस्ति।

वस्तुतः द्वीपशब्दस्यार्थो भवति- द्विर्गता द्वयोर्दिशोर्वा गता आपो यत्र। तादृशं क्षेत्रं द्वीपपदवाच्यम्। अत्र काकाक्षिगोलकन्यायेन द्वयोरित्युक्तेऽपि चतुर्दिक्षु इति सिद्धिः। एवम्भूतः जम्बूद्वीपः भुवः उत्तरीगोलार्द्ध व्यवस्थितोऽस्ति। भुवः दक्षिणीगोलार्द्ध क्षारक्षीराद्यम्बुधीनां निवेशः वर्तते। पुराणानुसारं क्षीरसमुद्रादेव अमृतस्योत्पत्तिस्तथा अमृतरश्मेः चन्द्रस्योत्पतिः सञ्जाता। अस्मिन्नेव क्षीरसिन्धौ श्री-ब्रह्मा-विष्णुप्रभृतयो देवाः निवसन्ति। इत्थम् आदौ लवणजलधिस्ततो दुग्धदधि-घृत-इक्षुरस-मद्य-स्वादुजलानां पृथक्-पृथक् सप्तसिन्धवः वर्तन्ते। स्वादुजलसिन्धौ एव वडवानलः अवस्थितोऽस्ति। एतेषु सप्त सिन्धुषु वयोवयोर्मध्ये एकैकः द्वीपः अवस्थितो विद्यते। (1) जम्बुद्वीप- सहिताः (2)शाक- (3)शाल्मल- (4)कौश(5)क्रौञ्च- (6)गोमेदक- (7)पुष्करेति सप्त द्वीपाः विलसन्ति। यथोक्तं सप्त द्वीपानामवस्थानविषये श्रीमता भास्कराचार्येण-

भूमेरर्धं क्षारसिन्धोरुदगस्थं जम्बुदवीपं प्राहुराचार्यवर्याः।
अर्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः।।

भुवः दक्षिणगोलार्द्ध अवस्थितानां सप्तसागराणां नामानि-

**लवणजलधिरादौ दुग्धसिन्धुश्च तस्मादमृतममृतरश्मिः श्रीश यस्माद्बभूव।**
**महितचरणपद्मः पद्मजन्मादिदेवैर्वसति सकलवासो वासुदेवश्च यत्र।।**
**दध्नो घृतस्येक्षुरसस्य तस्मान्मद्यस्य च स्वादुजलस्य चान्त्यः।**
**स्वादूदकान्तर्वडवानलोऽसौ पाताललोकाः पृथिवीपुटानि।**
**चञ्चत्फणामणिगणांशुकृतप्रकाशा एतेषु सासुरगणाः फणिनो वसन्ति।**
**दीव्यन्ति दिव्यरमणीरमणीयदेहैः सिद्धाश्च तत्र च लसत्कनकावभासैः।।**

भुवः दक्षिणगोलार्द्धे अवशिष्टानां षड्-द्वीपानां नामानि-

**शाकं ततः शाल्मलमत्र कौशं क्रौञ्चं च गोमेदकपुष्करे च।**
**द्वयोवयोरन्तरमेकमेकं समुद्रयोर्द्वीपमुदाहरन्ति।।**

- सिद्धान्तशिरोमणिः-गोलाध्यायः भुवनकोशः श्लो.सं. 21-25

एषु जम्बू-शाक-शाल्मल-कौश-क्रौञ्च-गोमेदक-पुष्करेति सप्तद्वीपेषु मध्ये अस्माकं एशियामहादेशस्य स्थितिः जम्बूद्वीपे वर्तते। समग्रस्य जम्बूद्वीपस्य प्रस्तारः आधुनिकभौगोलिकदृष्ट्या रशिया तः श्रीलङ्कां यावत् तथा इजराइल तः चीनदेशं यावत् वर्तते। अस्मिन् जम्बूद्वीपे द्वयोवयोः शैलयोर्मध्ये नवखण्डानामुल्लेखः प्राप्यते। एतानि एव नव खण्डानि नव-वर्षरूपेण आख्यातानि सन्ति। तद्यथा- 1. इलावृतवर्षम्, 2. भद्राश्ववर्षम्, 3. केतुमालवर्षम्, 4. रम्यकवर्षम्, 5. हिरण्यमयवर्षम्, 6. उत्तरकुरुवर्षम्, 7. हरिवर्षम्, 8. किन्नरवर्षम्, 9. भारतवर्षम् ।

एतेषां नगराणामवस्थानम् प्रकारान्तरेण इत्थमपि ज्ञातुं शक्यते। तद्यथा- **निरक्षदेशे**

गोमती

**लङ्कायमकोटीसिद्धपुरीरोमकपत्तनम् इति नगराणि पूर्व-पूर्वक्रमेण स्थितानि विद्यन्ते।** - वि. द्र. सिद्धान्त- शिरोमणि:-गोलाध्याय: भुवनकोश: श्लो.सं.17। अत्र लङ्कात: उत्तरोत्तरक्रमेण भारतवर्षम्-किन्नरवर्षम्-हरिवर्षमिति त्रीणि नगराणि सन्ति। सिद्धपुरीत: उत्तरोत्तरक्रमेण उत्तरकुरुवर्षम्-हिरण्यमयवर्षम्-रम्यकवर्षमिति त्रीणि नगराणि सन्ति। यमकोटीत: उत्तरे भद्राश्ववर्षम् विलसति। रोमकपत्तनात् उत्तरोत्तरक्रमेण केतुमालवर्षम्, इलावृतवर्षञ्च विलसति। इत्थं लङ्कात: उत्तरोत्तरक्रमेण त्रिणि नगराणि, सिद्धपुरीत: उत्तरोत्तरक्रमेण त्रिणि, यमकोटीत: उत्तरे एकमेव भद्राश्ववर्षम्, तथा रोमकपत्तनात् उत्तरोत्तरक्रमेण केतुमालवर्षम्, इलावृतवर्षञ्चेति वर्षद्वयं विलसति। अत: निरक्षदेशीय लङ्का- यमकोटी-सिद्धपुरी-रोमकपत्तनम् इति चतुर्व्य: प्रधाननगरेभ्य: उत्तरस्यां दिशि एतेषां वर्षाणामुल्लेख: पुराणेषु सिद्धान्तग्रन्थेषु च प्राप्यते।

अत्र लङ्कात: उत्तरस्यां दिशि अवस्थितस्य भारतवर्षस्य मध्येऽपि 1.ऐन्द्र- 2.कशेरु- 3. ताम्रपर्ण- 4.गभस्तिमद 5.कुमारिका- 6.नाग- 7.सौम्य- 8.वारुण- 9.गान्धर्वेति नवखण्डानामुल्लेख: प्राप्यते। एषु नवखण्डेषु ब्राह्मण-क्षत्रिय-वैश्य-शूद्रादीनां वर्णव्यवस्था कुमारिकाखण्डे एव वर्तते। शेषेषु अष्टपु खण्डेषु अन्त्यजजना: निवसन्ति। अन्यत्र वर्ण-संस्कृति-संस्कारादीनामभाव एव दृश्यते। विषयेऽस्मिन् उक्तं यथा श्रीमद्भास्कराचार्येण-

**ऐन्द्रं कशेरुशकलं किल ताम्रपर्णमन्यद्गभस्तिमदतश्च कुमारिकाख्यम् ।**
**नागं च सौम्यमिह वारुणमन्त्यखण्डं गान्धर्वसंज्ञमिति भारतवर्षमध्ये।।**
**वर्णव्यवस्थितिरिहैव कुमारिकाख्ये शेषेषु चान्त्यजजना निवसन्ति सर्वे।**
**माहेन्द्रशुक्तिमलय:कपारियात्रा: साह्य: सविन्ध्य इह सप्त कुलाचलाख्या:।।**

- सिद्धान्तशिरोमणि:-गोलाध्याय: भुवनकोश: श्लो.सं. 41-42

अत: सर्वैरपि भारतीयै: नूनमेव स्वीयसंस्कृते: परिरक्षणं कृत्वा वर्णव्यवस्थाया: सिद्धान्तस्य परिपालनम् आवश्यमेव करणीयमिति शम्।

- आचार्योध्यक्षश्च ज्योतिषविभागे
राष्ट्रियसंस्कृतसंस्थानम्, लखनऊ-परिसर:
e-mail:-profmmpathak@gmail.com

# भारतीयशिक्षाऽऽयोगः

– डॉ. गणेशंकरविद्यार्थी

आङ्ग्लानां शासनकाले आङ्ग्लप्रयासैः भारतीयशिक्षाव्यवस्था सर्वाधिकरूपेण प्रभाविता। प्राच्यपाश्चात्यविवादकारणात् प्रादुर्भूतसमस्यासमाधानार्थं कतिपयप्रयत्नाः सम्पादिताः। यथा 1855 तमे वर्षे प्रत्येकस्मिन् प्रान्ते लोकशिक्षाविभागस्य स्थापना सञ्जाता। वुड-आदेशपत्रानुसारम् उच्चशिक्षायाः माध्यमिकशिक्षायाः च सन्दर्भे प्रयासाः कृताः, परं प्राथमिकशिक्षायाः सन्दर्भे प्रयत्नः नैव सम्पादितः। तथा च निस्पन्दनसिद्धान्तोऽपि निराबाधरूपेण व्याप्तः आसीत्।

भारते शिक्षायाः सामान्यसमितिः सङ्गठिता तथा अनुशंसा निर्माणं विहितम्। 1880 तमे वर्षे लार्ड रिपनमहोदयः गवर्नरपदे आरूढः। तेन 1882 तमे वर्षे 'भारतीयशिक्षा-आयोगस्य स्थापना कृता। पूर्वप्रचलितायाः न्यूनतायाः समाधानार्थं प्राथमिकशिक्षायाः विषयेऽपि प्रयासः विहितः। अस्य आयोगस्य सदस्याः के.टी.तैलङ्ग-बुद्धदेवमुखर्जी-सैयदमोहम्मद-आनन्दमोहन-वसु-हाजीगुलाम-इत्यादयः आसन्। सर विलियमहण्टरमहोदयस्य अध्यक्षतायामायोगोऽयं सङ्घटितः। अतएव अस्यायोगस्य नामान्तरं 'हण्टर-आयोगः' इति विख्यातम्।

1880 तमे वर्षे अनिवार्यप्राथमिकशिक्षायाः कृते ब्रिटेनदेशे 'एलिमेण्टरी एजुकेशन एक्ट' इत्यस्य प्रस्तावस्याधारेणैव प्राथमिकशिक्षायाः संशोधने अधोलिखितानि उद्देश्यानि निर्धारितानि।

1. प्राथमिकशिक्षायाः विकासः।
2. सर्वकारसम्बद्धविद्यालयानाम् आवश्यकता।
3. मिशनरीविद्यालयानां भारतीयशिक्षायां स्थानम्।
4. वैयक्तिकप्रयासः।
5. माध्यमिकशिक्षायाः स्थितिः।

**आयोगस्य प्रमुखसंस्तुतयः**

**शिक्षानीतिः**

1. राजकीयविद्यालयाः शनैः-शनैः क्रमशः उत्तरदायित्वरहिताः विधेयाः।
2. अनुदानप्रणाली विस्तृता उदारा च स्यात्।
3. प्राथमिकशिक्षायाः उत्तरदायित्वं स्थानीयनिकायैः स्वीकरणीयम्।
4. माध्यमिकविद्यालयाः वैयक्तिकअधिकारे स्युः, एतदर्थं सहायतानुदानव्यवस्था परिकल्पनीया।

**प्राथमिकशिक्षाव्यवस्था-**

1. प्राथमिकशिक्षा जनसाधारणेनाऽपि प्राप्तव्या स्यात्।

2. प्रबन्धनम्-जिलापरिषद्-नगरपालिका-स्थानीयनिकायैः च करणीयम्। वित्तस्य व्यवस्थाऽपि तैरेव विधेया।

3. निरीक्षणम्- विद्यालयनिरीक्षकेन निरीक्षणं करणीयं, सर्वकारेण विशेषावधानं प्रदेयम्।

4. पाठ्यक्रमः- पाठ्यक्रमे प्रदेशानुसारं स्वातन्त्र्यं भवेत्।

5. प्रमुखविषयाः- कृषिविज्ञानम्, आरोग्यविज्ञानम्, औद्योगिककलासम्बद्धं ज्ञानम्।

**माध्यमिकशिक्षाव्यवस्था-**

1. आवश्यकतानुसारं सर्वकारस्य साहाय्यं स्वीकरणीयम्। अनुदानप्रणाली उदारा भवेत्।

2. सर्वेषु विद्यालयेषु स्तरोन्नयनार्थं प्रशिक्षितशिक्षकवर्गः नियोजनीयः।

3. शिक्षायाः माध्यमः 'आङ्ग्लभाषाः' भवेत्।

4. स्तरोन्नयनार्थं पाठ्यक्रमः भागद्वये विभक्तः।

(क) साहित्यिकपाठ्यक्रमः (विश्वविद्यालये प्रवेशार्थम्)

(ख) व्यावसायिकपाठ्यक्रमः।

**उच्चशिक्षाव्यवस्था-**

1. शिक्षणसंस्थानां स्थापना अनुदानेन स्यात्।

2. विद्यालयाः विविधोपकरणैः सम्पन्नाः भवेयुः।

3. यूरोपशिक्षाप्राप्ताः भारतीयाः अध्यापनार्थं नियोजनीयाः।

4. छात्राः स्वरुच्यनुसारं विषयचयनार्थं स्वतन्त्राः भवेयुः।

5. छात्रप्रोत्साहनार्थं छात्रवृत्तिव्यवस्था परिकल्पनीया।

6. अनिवार्यरूपेण पाठ्यसहगामीक्रियाणां व्यवस्था भवेत्।

**विशिष्टशिक्षाव्यवस्था-**

**(क) मुस्लिमशिक्षा**- मुस्लिमविद्यालयानां प्रोत्साहनम् आवश्यकम्। अत्र निरीक्षणार्थं मुस्लिमनिरीक्षक एव कल्पनीयः, विशिष्टप्रशिक्षणव्यवस्था, छात्रवृत्तिः, अनुदानव्यवस्थां च स्यात्।

**(ख) स्त्रीशिक्षा**- स्त्रीशिक्षायै पर्याप्त आर्थिकसहायता प्रदेया। निरीक्षिका नियोज्या। अध्यापिकानां व्यवस्था स्यात्। तदनुरूपं निरीक्षणं भवेत्।

**(ग) धार्मिकशिक्षा**- धर्मनिरपेक्षराष्ट्रस्य शिक्षणसंस्थासु धार्मिकशिक्षायाः सञ्चालनम् अशक्यम् अनुचितञ्च वर्तते। विद्यालयेषु वैयक्तिकरूपेण धार्मिकशिक्षा सञ्चालनं कर्तुं शक्यते।

**(घ) आदिवासिशिक्षा मिशनरी आलोचना च**- भारतीयशिक्षा-आयोगेन निर्दिष्टं यत् आदिवासिजनाः अशिक्षिताः सन्ति। अतः आदिवासिजनेभ्यः शिक्षाव्यवस्था परिकल्पनीया, कार्यस्यास्य क्रियान्वयनं निरन्तरं स्यात्।

2. प्रबन्धनम्-जिलापरिषद्-नगरपालिका-स्थानीयनिकायैः च करणीयम्। वित्तस्य व्यवस्थाऽपि तैरेव विधेया।

3. निरीक्षणम्- विद्यालयनिरीक्षकेन निरीक्षणं करणीयं, सर्वकारेण विशेषावधानं प्रदेयम्।

4. पाठ्यक्रमः- पाठ्यक्रमे प्रदेशानुसारं स्वातन्त्र्यं भवेत्।

5. प्रमुखविषयाः- कृषिविज्ञानम्, आरोग्यविज्ञानम्, औद्योगिककलासम्बद्धं ज्ञानम्।

**माध्यमिकशिक्षाव्यवस्था-**

1. आवश्यकतानुसारं सर्वकारस्य साहाय्यं स्वीकरणीयम्। अनुदानप्रणाली उदारा भवेत्।

2. सर्वेषु विद्यालयेषु स्तरोन्नयनार्थं प्रशिक्षितशिक्षकवर्गः नियोजनीयः।

3. शिक्षायाः माध्यमः 'आङ्ग्लभाषाः' भवेत्।

4. स्तरोन्नयनार्थं पाठ्यक्रमः भागद्वये विभक्तः।

(क) साहित्यिकपाठ्यक्रमः (विश्वविद्यालये प्रवेशार्थम्)

(ख) व्यावसायिकपाठ्यक्रमः।

**उच्चशिक्षाव्यवस्था-**

1. शिक्षणसंस्थानां स्थापना अनुदानेन स्यात्।

2. विद्यालयाः विविधोपकरणैः सम्पन्नाः भवेयुः।

3. यूरोपशिक्षाप्राप्ताः भारतीयाः अध्यापनार्थं नियोजनीयाः।

4. छात्राः स्वरुच्यनुसारं विषयचयनार्थं स्वतन्त्राः भवेयुः।

5. छात्रप्रोत्साहनार्थं छात्रवृत्तिव्यवस्था परिकल्पनीया।

6. अनिवार्यरूपेण पाठ्यसहगामीक्रियाणां व्यवस्था भवेत्।

**विशिष्टशिक्षाव्यवस्था-**

**(क) मुस्लिमशिक्षा-** मुस्लिमविद्यालयानां प्रोत्साहनम् आवश्यकम्। अत्र निरीक्षणार्थं मुस्लिमनिरीक्षक एव कल्पनीयः, विशिष्टप्रशिक्षणव्यवस्था, छात्रवृत्तिः, अनुदानव्यवस्थां च स्यात्।

**(ख) स्त्रीशिक्षा-** स्त्रीशिक्षायै पर्याप्त आर्थिकसहायता प्रदेया। निरीक्षिका नियोज्या। अध्यापिकानां व्यवस्था स्यात्। तदनुरूपं निरीक्षणं भवेत्।

**(ग) धार्मिकशिक्षा-** धर्मनिरपेक्षराष्ट्रस्य शिक्षणसंस्थासु धार्मिकशिक्षायाः सञ्चालनम् अशक्यम् अनुचितञ्च वर्तते। विद्यालयेषु वैयक्तिकरूपेण धार्मिकशिक्षा सञ्चालनं कर्तुं शक्यते।

**(घ) आदिवासिशिक्षा मिशनरी आलोचना च-** भारतीयशिक्षा-आयोगेन निर्दिष्टं यत् आदिवासिजनाः अशिक्षिताः सन्ति। अतः आदिवासिजनेभ्यः शिक्षाव्यवस्था परिकल्पनीया, कार्यस्यास्य क्रियान्वयनं निरन्तरं स्यात्।

आयोगस्य दोषाः-

1. आङ्ग्लभाषायाः माध्यमप्रभावात् मातृभाषायाः भारतीयभाषायाश्च अवहेलना।
2. प्रौद्योगिकव्यावसायिकशिक्षाऽवहेलनाकारणात् आर्थिक-औद्योगिकोन्नति-अवहेलना सञ्जाता।
3. अनिवार्य प्राथमिकशिक्षायाः विषयनिर्धारणाभावः।
4. शिक्षाक्षेत्रे आयोगस्य प्रत्यावर्तननीतिः।

परिणामाः-

प्राथमिकशिक्षा प्रभावहीना सञ्जाता, यतोहि सर्वकारस्य नियन्त्रणाभावात् एषा अव्यवस्था उत्पन्ना। माध्यमिक- शिक्षाव्यवस्था उन्नता अभवत्। महाविद्यालय-विश्वविद्यालयोन्मुखी छात्रवर्गः अप्रवर्तत्। 1882 वर्षपर्यन्तं 38 महाविद्यालयाः स्वायत्तसंगठनद्वारा स्थापिताः। एवमेव 1902 वर्षपर्यन्तं 191 महाविद्यालयाः अखिलभारतवर्षे प्रवर्तिताः। आयोगेन प्राथमिकशिक्षाविषयकप्रावधाननिर्धारणं कृतम् अतएव आयोगोऽयम् अभिनन्दनीयः। स्त्रीशिक्षाधार्मिकशिक्षादिक्षेत्रष्वपि आयोगेन चिन्तनं विहितम्।

अनुशीलितग्रन्थाः-


1. भारतीय पुरातनी शिक्षा- डॉ. लोकमान्यमिश्रः।
2. भारतीय शिक्षा का विकास एवं समस्याएं- श्रीमती सन्ध्या मुखर्जी।
3. भारतीय शिक्षा और उनकी समस्याएं- पी. डी. पाठक।
4. भारतीय शिक्षा के आयोग- पी. डी. पाठक, जी. एस. डी. त्यागी।



- असिस्टेंट प्रोफेसर
शिक्षाशास्त्रविभागः
राष्ट्रियसंस्कृतसंस्थानम्, लखनऊपरिसरः

# न्याय-मीमांसा-वैयाकरणानां मते शब्दस्वरूपविचारः

- डॉ. प्रमोदकुमारशुक्लः

सम्पूर्णेऽपि विश्वे ये केऽपि जीवधारिणः सन्ति, ते सर्वेऽपि स्वाभिव्यक्तिं शब्दैरेव कुर्वन्ति। शब्दं विना जनाः स्वाभिव्यक्तिं परस्परं आदनप्रदानं कर्तुं सक्षमाः न भवन्ति। अतः सर्वप्रथमं मया अत्र विचार्यते यत् को नाम शब्दः? किञ्च तस्य स्वरूपम्? वर्ण (ध्वनि) रूपः तदतिरिक्तो वा? अनित्यः अनित्यो वा? एकः अनेको वा? अखण्डः सखण्डो वा? द्रव्यरूपो गुणो वा? अणुरूपा विभुर्वा? इत्यादि विषये नैयायिक-मीमांसक-वेदान्ति-सांख्य-योगानुयायि-जैनादीनां वैयाकरणानां च महान् भेदो वर्तते। तत्र केषाञ्चिद् मते वर्णाः एकवाचकाः सन्ति, तत्रापि केषाञ्चिन् मते वर्णानां नित्यत्त्वं एकत्वं विभुत्त्वं द्रव्यत्वादिकं मन्यते, तर्हि अन्येषां मते नित्यत्त्वं अनेकत्त्वं गुणत्त्वादिकं स्वीक्रियते। ध्वनिशब्दत्त्व पक्षेऽपि केषाञ्चिद् मते अणुपरिणामः शब्दः इति स्वीक्रियते। केषाञ्चिद् मते कण्ठताल्वादि अभिघातादिना तत्तद्वर्णादिशब्दरूपेण परिणमते अर्थात् सूक्ष्मवागात्मना स्थितम्, आन्तरं ज्ञानमेव स्वं रूपं प्रकाशयितुं शब्दरूपेण बहिः परिणते विवृत्तं वा भवति इति स्वीक्रियते। इत्थं शब्दस्वरूपादि विषये तत्तच्छास्त्रानुयायिनां नानाविधानि मतानि समुपलभ्यन्ते। इतः पूर्वं अस्माभिः बहुधा श्रुतं यत् वैयाकरणः स्फोटात्मकं शब्दं वृत्याश्रयतया स्वीकुर्वन्ति इति।

अत्र सर्वेषां पूर्वोक्तानां सिद्धान्तप्रतिपादनं कर्तुं न शक्यते। अतः अत्र केवलं नैयायिकानां मीमांसकानां वैयाकरणानां च शब्दस्वरूपविषयकः सिद्धान्तः संक्षेपेण प्रस्तोष्यते। शब्दस्वरूपविषये नैयायिकानमभिमतम्-

तत्र को नाम शब्दः? इति जिज्ञासायां नैयायिकैः उच्यते यत् श्रोत्रेन्द्रियग्राह्यो गुणः शब्दः भवति। स शब्दः द्विविधोऽस्ति-ध्वन्यात्मकः वर्णात्मकश्च। तत्र मृदङ्गादिजन्यः अस्फुटशब्दः एव ध्वनिः अस्ति। कण्ठसंयोगादिजन्यः कखादिरूपः स्फुटशब्दः एव वर्णः वर्तते।

तथा च एतादृशवर्णानां समूहः एव पदं भवति, पदानां समूहश्च वाक्यं भवति। उक्तञ्च न्यायभाष्ये ''वर्णसमूहः पदम्, पदसमूहो वाक्यम्'' इति। न्यायलीलावत्यामपि किं तर्हि प्रातिपदिकं? इति जिज्ञासायामुक्तं यत् **''क्रमवद् वर्णसंहतिरिति ब्रूमः''**[1] इति। अतः वर्णाः एव समुदिताः पदभावापन्नाः सन्तो वाचकाः भवन्ति। इत्युक्ते वर्णातिरिक्तस्य पदस्य, पदातिरिक्तस्य वाक्यस्य वा काचिद् पृथक् सत्ता न स्वीक्रियते, अपितु वर्णसमुदायस्यैव वाचकत्त्वं, पदसमुदायस्यैव वाक्यत्वं च स्वीक्रियते। अत्र एका जिज्ञासा जायते यत् कमलाकान्तकाय कान्तिकमनीयतादिपदेषु श्रूयमाणः ककारः एक एव वर्तते अनेको वा? अत्र तार्किकै उच्यते यत् एकः ककारो नास्ति, अपितु अनेके ककाराः सन्ति। ककारादिवर्णानां एकत्त्वं न स्वीक्रियते, अपितु अनेकत्वमेव अङ्गीक्रियते।

यतोहि ककारादिवर्णानां यदि एकत्व स्यात् तदा युगपद् अनेकस्थलेषु तेषामुपलब्धिः न स्यात्।

# न्याय-मीमांसा-वैयाकरणानां मते शब्दस्वरूपविचारः

- डॉ. प्रमोदकुमारशुक्लः

सम्पूर्णेऽपि विश्वे ये केऽपि जीवधारिणः सन्ति, ते सर्वेऽपि स्वाभिव्यक्तिं शब्दैरेव कुर्वन्ति। शब्दं विना जनाः स्वाभिव्यक्तिं परस्परं आदनप्रदानं कर्तुं सक्षमाः न भवन्ति। अतः सर्वप्रथमं मया अत्र विचार्यते यत् को नाम शब्दः? किञ्च तस्य स्वरूपम्? वर्ण (ध्वनि) रूपः तदतिरिक्तो वा? अनित्यः अनित्यो वा? एकः अनेको वा? अखण्डः सखण्डो वा? द्रव्यरूपो गुणो वा? अणुरूपा विभुर्वा? इत्यादि विषये नैयायिक-मीमांसक-वेदान्ति-सांख्य-योगानुयायि-जैनादीनां वैयाकरणानां च महान् भेदो वर्तते। तत्र केषाञ्चिद् मते वर्णाः एकवाचकाः सन्ति, तत्रापि केषाञ्चिन् मते वर्णानां नित्यत्त्वं एकत्वं विभुत्त्वं द्रव्यत्वादिकं मन्यते, तर्हि अन्येषां मते नित्यत्त्वं अनेकत्त्वं गुणत्त्वादिकं स्वीक्रियते। ध्वनिशब्दत्त्व पक्षेऽपि केषाञ्चिद् मते अणुपरिणामः शब्दः इति स्वीक्रियते। केषाञ्चिद् मते कण्ठताल्वादि अभिघातादिना तत्तद्वर्णादिशब्दरूपेण परिणमते अर्थात् सूक्ष्मवागात्मना स्थितम्, आन्तरं ज्ञानमेव स्वं रूपं प्रकाशयितुं शब्दरूपेण बहिः परिणते विवृत्तं वा भवति इति स्वीक्रियते। इत्थं शब्दस्वरूपादि विषये तत्तच्छास्त्रानुयायिनां नानाविधानि मतानि समुपलभ्यन्ते। इतः पूर्वं अस्माभिः बहुधा श्रुतं यत् वैयाकरणः स्फोटात्मकं शब्दं वृत्याश्रयतया स्वीकुर्वन्ति इति।

अत्र सर्वेषां पूर्वोक्तानां सिद्धान्तप्रतिपादनं कर्तुं न शक्यते। अतः अत्र केवलं नैयायिकानां मीमांसकानां वैयाकरणानां च शब्दस्वरूपविषयकः सिद्धान्तः संक्षेपेण प्रस्तोष्यते। शब्दस्वरूपविषये नैयायिकानमभिमतम्-

तत्र को नाम शब्दः? इति जिज्ञासायां नैयायिकैः उच्यते यत् श्रोत्रेन्द्रियग्राह्यो गुणः शब्दः भवति। स शब्दः द्विविधोऽस्ति-ध्वन्यात्मकः वर्णात्मकश्च। तत्र मृदङ्गादिजन्यः अस्फुटशब्दः एव ध्वनिः अस्ति। कण्ठसंयोगादिजन्यः कखादिरूपः स्फुटशब्दः एव वर्णः वर्तते।

तथा च एतादृशवर्णानां समूहः एव पदं भवति, पदानां समूहश्च वाक्यं भवति। उक्तञ्च न्यायभाष्ये ''वर्णसमूहः पदम्, पदसमूहो वाक्यम्'' इति। न्यायलीलावत्यामपि किं तर्हि प्रातिपदिकं? इति जिज्ञासायामुक्तं यत् **''क्रमवद् वर्णसंहतिरिति ब्रूमः''**[1] इति। अतः वर्णाः एव समुदिताः पदभावापन्नाः सन्तो वाचकाः भवन्ति। इत्युक्ते वर्णातिरिक्तस्य पदस्य, पदातिरिक्तस्य वाक्यस्य वा काचिद् पृथक् सत्ता न स्वीक्रियते, अपितु वर्णसमुदायस्यैव वाचकत्त्वं, पदसमुदायस्यैव वाक्यत्वं च स्वीक्रियते। अत्र एका जिज्ञासा जायते यत् कमलाकान्तकाय कान्तिकमनीयतादिपदेषु श्रूयमाणः ककारः एक एव वर्तते अनेको वा? अत्र तार्किकै उच्यते यत् एकः ककारो नास्ति, अपितु अनेके ककाराः सन्ति। ककारादिवर्णानां एकत्त्वं न स्वीक्रियते, अपितु अनेकत्वमेव अङ्गीक्रियते।

यतोहि ककारादिवर्णानां यदि एकत्व स्यात् तदा युगपद् अनेकस्थलेषु तेषामुपलब्धिः न स्यात्।

भवति च अनेकस्थलेषु कमलाकान्तादिषु युगपद् ककारादिवर्णानाम् उपलब्धिः। अतस्तेषामनेकत्वमेव। वयं पश्यामः यत् भिन्न-भिन्नपुरुषैः भिन्नभिन्नास्थलेषु सकृद् एव ककारादिवर्णाः उच्चार्यन्ते। तत्र यदि तेषां एकत्वं स्यात् तदा विभिन्नपुरुषैः सकृद् उच्चारणं न स्यात्। अतः वर्णानां बहुत्वं स्वीकर्तव्यम्। तत्र ध्वनि-वर्णभेदेन द्विविधः एते सर्वेऽपि शब्दाः समवायसम्बन्धने आकाशे तिष्ठन्ति, इत्युक्ते शब्दमात्र आकाश समवेतं भवति इति बोध्यम्। ननु उक्तं श्रोत्रेन्द्रियग्राह्यो गुणः शब्दः भवति इति। अत्र एका जिज्ञासा उदेति यत् भेरीमृदङ्गादिदेशे शब्दस्य उत्पत्तिः भवति। श्रोतदेशे तु शब्दस्य उत्पत्तिः न भवति, अतः मृदङ्गादिदेशे उत्पन्नस्य शब्दस्य श्रोत्रेण ग्रहणं कथं भवति? अस्य जिज्ञासायामुच्यते यत्-

**सर्वः शब्दोनभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते।**

**वीचितरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता॥**

**कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते॥**[2]

अतः अस्माभिः ध्यातव्यं यत् वीचितरङ्गन्यायो भवतु कदम्बगोलकन्यायो वा। पक्षद्वयेऽपि प्रथमशब्दस्य श्रोत्रेन्द्रियेण प्रत्यक्षं न भवति, अपितु शब्दजशब्दाः ये श्रोत्रेदेशं प्राप्ताः तेषामेव ग्रहणं भवति। प्रथम शब्दस्तु अतीन्द्रियो भवति। न्यायनये ध्वन्यात्मको शब्दः भवतु वर्णात्मको वा, द्विविधोऽपि शब्दाः उत्पत्तिदृष्ट्या त्रिविधो भवति- संयोगजः, शब्दः, विभागजः शब्दः, शब्दजः शब्दाश्च। तत्र मृदङ्गादिजन्यो ध्वनिः, वायुकण्ठादि-संयोगजन्यो वर्णो वा संयोगजशब्दः अस्ति। वंशदलद्वयविभागजन्यः वृक्षशाखादितिदारणजन्या वा ध्वनि, ओष्ठद्वयविभागजन्यो वर्णाश्च विभागजशब्द अस्ति। तथा एकेन प्रथमेन शब्देन उत्पन्नाः अन्ये शब्दाः शब्दजशब्दाः सन्ति।

न्यायनये शब्दाः अनित्याः एव सन्ति, यतो हि ककारः उत्पन्नः, ककारो नष्टः' इत्यादिरूपा उत्पत्तिविनाशावगाहिनी प्रतीतिः नैव स्यात्, किन्तु प्रतीतिर्तु भवति। अतः शब्दानित्यत्त्वमेव मन्तव्यम् इति नैयायिकानां निष्कर्षः।

पुनः अत्र एका शङ्का जायते यत् यथा कश्चित् पुरुषः देवदत्तं काश्यां पठन्तं दृष्टवान्। ततः बहुकालानन्तरं यदा पुनः सः देवदत्तं देहल्यां पश्यति तदा सो वदति यत् सोऽयं देवदत्तः यः काश्यां दृष्टः' इति। इदं प्रत्यभिज्ञानं प्रत्याभिज्ञा वा इति उच्यते। अनेन प्रत्यभिज्ञानेन काश्यां दृष्टस्य देहल्यां दृश्यमानरूपस्य च देवदत्तस्य अभेदः प्रतीयते। तथैव शब्दविषयेऽपि 'सोऽयं ककारः यः पूर्वं श्रुतः' इत्यादिरूपा प्रत्यभिज्ञात्मकप्रतीतिर्जायते। अनय प्रतीत्या च पूर्वं श्रुतस्य इदानीं श्रूयमाणस्य च ककारस्य अभेदः सुनिश्चितो भवति। अनया अभेदावगाहिन्या प्रतीत्या च ककारादिवर्णस्य नित्यत्त्वं सिद्ध्यति, यतोहि ''तावत् कालं स्थितं चैनं कः पश्चाद् नाशयिष्यति'' इति न्यायेन एतावत् कालं यावत् स्थितस्य ककारस्य विनाशः नोचितः। अतः सोऽयं ककारः' इति प्रत्यभिज्ञया वर्णानां नित्यत्वमेव उचितम् प्रतिभाति, कथं वर्णानां अनित्यत्वं स्वीक्रियते?

अस्याः समाधानाय नैयायिकैरुच्यते यत् प्रत्यभिज्ञया शब्दानां नित्यत्वं साधयितुं न शक्यते, यतोहि प्रत्यभिज्ञा स्वसादृश्य विषयता अपि भवति। तद्यथा- मिष्ठान्नतिपणिं गत्वा जनाः वदन्ति यत् यद्

मिष्ठान्नं पूर्वमस्माभिः अत्र भुक्तम् तदेव मिष्ठान्नं दीयताम्। अधुना भवान् एव विचारयतु यत् यद् मिष्ठान्नं भुक्तं तदैव मिष्ठान्नं पुनः कुतः आयास्यति? तत्सदृशं मिष्ठान्नं भवितुमर्हति, न तु तदेव। तथापि 'तत्सदृशं मिष्ठान्नं दीयताम्' इति वक्तव्ये 'तदेव मिष्ठान्नं दीयतामित्युच्यते'। विक्रेतापि वदति तदेव इदं मिष्ठान्नं इति। एवमेव 'तदेवैतद् औषधम्, सैवेयं दीपकलिका इत्यादिप्रत्यभिज्ञा जायते। अतः व्यक्त्यभेदः प्रत्यभिज्ञायाः विषयो नास्ति, अपितु तत्सजातीयत्वं प्रत्यभिज्ञया विषयोऽस्ति। अतः प्रत्यभिज्ञया वर्णानां नित्यत्वं स्वीकर्तुं नैव शक्यते। तदेतत् अनित्यत्वं महर्षिगौतमेन "आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च" इत्यादि सूत्रद्वारा प्रतिपादितं विद्यते। अतः वर्णाः अनित्याः एवेति बोध्यम्।

ननु अनित्यानां वर्णानां समूहः पदं भवति इति प्रतिपादितम्, वर्णसमूहात्मकं पदं वाचकं शक्तं भवति इति सिद्धान्तितम्। परन्तु एषः पक्षः नास्ति युक्तः। यतोहि वर्णानां समुदायः तदा स्यात् यदा वर्णाः युगपत् उत्पन्नाः स्थिता वा भवेयुः। किन्तु वर्णाः युगपत् उत्पन्नाः स्थिता वा न भवन्ति। ते क्रमेण उत्पन्नाः स्थिताः विनष्टाश्च भवन्ति। अर्थात् वर्णाः क्रमेण प्रथमक्षणे उत्पद्यन्ते, द्वितीयक्षणे तिष्ठन्ति, तृतीयक्षणे नश्यन्ति च। इत्थं उत्तरोत्तरवर्णोच्चारणकाले पूर्व-पूर्ववर्णानां नाशो जायते। अतः क्रमेण उत्पन्नायां विनाशशालिनां वा एतेषां वर्णानां युगपद् एकदा उत्पत्ते। स्थितेर्वा अभावात् समुदायो नैव सम्भवति। अतः कथं वर्णसमुदाय रूपपदस्य वाचकत्वम्? तदा तार्किकैरुच्यते यत् यथाक्रमेण उत्पन्ना अपि ग्रासाः समुदिताः तृप्तिमुत्पादयन्ति तथैव क्रमेण उत्पन्ना अपि वर्णाः संस्कारद्वारा समुदायत्वं प्राप्य कार्यकराः सम्भवन्ति इति।

**मीमांसकानां मते शब्दस्वरूपम्**- मीमांसकानां मतेऽपि वर्णानामेव वाचकत्वं स्वीक्रियते। किन्तु नैयायिकानां मते वर्णाः यथा अनित्याः सन्ति तथा एतेषां मते वर्णाः अनित्याः न सन्ति। अपितु वर्णा, ध्वनिव्यङ्ग्याः नित्याः विभवः एकत्वसंख्यावन्तश्च वर्तन्ते। तथा हि उक्तञ्च **"अथ गौरित्यत्र कः शब्दः"**[3]? गकारौकारविसर्जनीया इति भगवानुपवर्षः" इति। प्रकरणपञ्चिकायामपि प्रोक्तं **"....कः शब्दो अभिमतः? वर्णाः तेषामेव श्रोत्रग्राह्यत्वात्"**[4] इति। शाङ्करभाष्ये च प्रोक्तं **"श्रोत्रग्रहणे हि अर्थे लोके शब्दशब्दः प्रसिद्धः"**[5]। एवमेव अन्यत्रापि शब्दलक्षणं प्रतिपादितम्। तत्र अस्माभिः इदं बोध्यं यत् श्रोत्रग्राह्यं एव वस्तूनि (अर्थे) शब्दः प्रसिद्धो वर्तते। श्रोत्रग्राह्यश्च वर्णाः एव भवन्ति, न तु स्फोटाः। अतः वर्णाः एव वाचकाः सन्ति। स्फोटनामा कश्चित् वर्णातिरिक्तो वाचकः शब्दो नास्त्येव इति मीमांसकानां मतं वर्तते। शास्त्रदीपिकायां निगदितं "तस्माद् व्यञ्जकध्वनीनां क्रमेण व्यङ्ग्येषु वर्णेषु समारोपितेन तदवन्तः स्मर्यमाणाः वर्णा वाचकाः, नान्यः शब्दोऽस्ति"।

एतेषां मते वर्णानां नित्यत्वं स्वीक्रियते। तद्यथा-पूर्वं कदाचिद् श्रुतस्य ककरादिवर्णस्य इदानीं श्रूयमाण ककारादिवर्णेन सह अभेदावगाहिनी "सोऽयं ककारः", सोऽयं गकारः" इत्यादिरूपा प्रत्यभिज्ञा ज्ञायते इति विदितमेव। अनया प्रत्यभिज्ञया सुस्पष्टं भवति यत् ककारादिवर्णः तावत्कालपर्यन्तं स्थिरोऽस्ति। अनया ककारादि वर्णस्य तावत्कालमेव स्थिरत्वं बोध्यते। "तावत्कालं स्थिरत्वे च सिद्धे "तावत्कालं स्थिरं चैवं कः पश्चान्नाशयिष्यति" इति न्यायेन वर्णात्मकशब्दस्य नित्यत्वं सिद्धयति।

अनुभूयते एव। एकस्य ककारस्य विभुत्वं विना सर्वत्र उपलब्धिः नैव सम्भवति। अतः सर्वदेशेषु उपलभ्यमानत्वात् ककारादेः विभुत्वं (व्यापकत्वं) स्वीक्रियते।

किञ्च कमलाकान्तकायकान्तिप्रभृतिषु युगपत् ककारादिवर्णाः गगनवत् उपलभ्यते इति सर्वैः

'ननु सर्वत्र उपलभ्यमानत्वात् ककारादिशब्दस्य बहुत्वमेव मन्यताम्, विभुत्वं कथं स्वीक्रियते? इति शङ्का तु नैव करणीया, शब्दस्य बहुत्वस्वीकारे महद्गौरवं वर्तते। अतः लाघवात् एकत्वमेव मन्तव्यम्। ककारादि घटितेषु सर्वेष्वपि पदेषु अनुभूयमानाः सर्वोऽपि ककाराः एक एव न तु नाना। व्यवहारेऽपि दृश्यते यत् कश्चित् पुरुषः बारं-बारं (पौनः-पुन्येन) ककारम् उच्चारयति, तदा तमुद्दिश्य जनाः कथयन्ति यत् अनेन पुरुषेण दशकृत्वः ककारः उच्चारितः इति। दशककाराः उच्चारिताः पञ्चककाराः उच्चारिताः इति व्यवहारे नैव दृश्यते। अतः अनेनापि प्रतीयते यत् ककारः एक एवास्ति। तस्यैव एकस्य ककारस्य वारं-बारमुच्चारणं भवति। अतः वर्णानामेकत्वमेव स्वीक्रियते मीमांसकैः। किञ्च नैयायिकनये ध्वन्यात्मको वर्णात्मको वा सर्वेऽपि शब्दाः गुण एव वर्तन्ते इति अस्माभिः पूर्वं ज्ञातमेव। मीमांसकानां मते तु सर्वोऽपि शब्दाः इत्थमेव स्वीक्रियते।

इत्थं तत्र मीमांसकैः अनेकाभिः युक्तिभिः शब्दानां नित्यत्वं एकत्वं विभुत्वं द्रव्यत्वं च साध्यते अत्रायमेव निष्कर्षो बोध्यः यत् वर्णा एव शब्दः, ते च वर्णाः नित्या द्रव्यरूपा विभवश्च सन्ति पदवाक्यानामपि वर्णसमुदायरूपत्वं प्रत्येकमेकत्वं नित्यत्वं विभुत्त्वं च बोध्यम्। महर्षिजैमिनिना प्रोक्तं ''औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः'' इति। अत्र औत्पत्तिको नाम नित्यः इति। अतः वर्णसमुदायरूपाणि पदानि वाक्यानि च नित्यानि एव। अन्यथा पदादीनां नित्यत्वं न स्वीक्रियते, तदा तत्सम्बन्धस्यापि नित्यत्वं नैव स्यात्।

**शब्दस्वरूपविषये वैयाकरणानामभिमतम्**- वैयाकरणानां मते ध्वन्यात्मकः स्फोटात्मकश्चेति द्विविधः शब्दः स्वीकृतो वर्तते। तत्र भगवता भाष्यकारेण महाभाष्ये **''येनोच्चारिते सास्नालङ्गूलक-कुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः**[6]'', श्रोत्रोपलब्धिर्बुद्धिनिग्राह्यः प्रयोगेणाभिज्वलितः आकाशदेशः शब्दः, तर्हि स्फोटः शब्दः ध्वनिः शब्दगुणः'' इत्यादि वचनैः स्फोटात्मकशब्दः प्रतिपादितो वर्तते। तथा च ''अथवा प्रतीतपदार्थको लोके ध्वनिः शब्दः इत्युच्यते। तद्यथा- तस्माद् ध्वनिः शब्दः'' इत्यादिना च ध्वन्यात्मकः शब्दः प्रतिपादितो वर्तते। भर्तृहरिणाऽपि प्रोक्तम्-

**द्वावुपादानशब्देषु शब्दो शब्दविदो विदुः।**
**एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते।।**[7]

अतः द्विविधो शब्दो वर्तते, ध्वनिरूपः स्फोटरूपश्च। तत्र ध्वनिशब्दः साक्षात् अर्थवाचको न भवति, अपितु ध्वनिना स्फोटः अभिव्यक्तो भवति। अभिव्यक्तेन स्फोटेन च अर्थबोधो जायते। अतः अर्थबोधकजनकः स्फोटात्मकशब्दः वर्तते, तस्य स्फोटात्मकस्य शब्दस्य अभिव्यञ्जकः ध्वनिः वर्तते इति ध्वनिस्फोटयोः व्यङ्ग्यव्यञ्जकभावसम्बन्धो वर्तते इति बोधयम्। तत्र ध्वनिरूपः शब्दः कार्यः

(अनित्यः) स्फोटव्यञ्जकश्च भवति। स्फोटरूपशब्दः नित्यः वर्णरूपध्वनिव्यङ्ग्यः अर्थवाचकश्च वर्तते। एवमपि विभागः भवितुमर्हति यत् व्याकरणनये शब्दो द्विविधः कार्यो नित्यश्च। तत्र स्फोटव्यञ्जकः ध्वनिरूपशब्दः कार्यः अस्ति, स्फोटरूपशब्दः नित्यश्च वर्तते। तदुक्तं भाष्कारेण–

''**चत्वारि शृङ्गा**''[8] इति मन्त्रव्याख्यानावसरे– ''**द्वौ शब्दात्मानौ कार्यो नित्यश्चेति**''।[9] अस्माभिः न्यायशास्त्रादिसिद्धान्तानुसारं पूर्वं ज्ञातं यत् ''शब्दो द्विविधो ध्वन्यात्मकः वर्णात्मकश्च''। अत्रेदं ध्यातव्यं यत् न्यायशास्त्रसम्मतः द्विविधोऽपि शब्दः व्याकरणशास्त्रदृष्ट्या ध्वन्यात्मकः एव। किञ्च लोकव्यवहारे पदार्थबोधकत्वेन प्रसिद्धः यः श्रोत्रग्राह्यवर्णरूपध्वनीनां समूहः स एव शब्देति लोके व्यपदिश्यते। तदनुरोधात् एवात्र ध्वनेः शब्दत्वं प्रतिपादितं वर्तते। वस्तुतः व्याकरणशास्त्रप्रतिपाद्यः अर्थवाचकत्वेन अभिमतः यो वास्तविकः शब्दः, स तु स्फोटरूप एव, ध्वनिस्तु शब्दस्य गुणः-अभिव्यञ्जकत्वेन उपकारकः वर्तते इति।

केषाञ्चित् आधुनिकवैयाकरणानां मते व्याकरणे शब्दः त्रिधा विभक्तो वर्तते– अनपहितः, ध्वन्युपहितः, उपाधिभूतश्च तत्र परा रूपः शब्दः अनुपहितः, स्फोटरूपशब्दः ध्वन्युपहितः, ध्वनिरूपशब्दः उपाधिभूतश्च वर्तते।

अतः अत्र न्याय–मीमांसा–वैयाकरणानां च मते साररूपेण शब्दस्वरूपपरिचयः समुपस्थापितः। शब्दस्वरूपविषये आचार्यैः बहुधा विचाराः कृताः। परं मया अत्र यथामति सारांशतया शब्दस्य परिचयः विवेचितः इति।

**सन्दर्भः–**

1. न्यायलीलावती 2. वही 3. महाभाष्यम् 4. प्रकरण पञ्चिका 5. शाङ्करभाष्यम्
6. महाभाष्यम् 7. वाक्यपदीयम् 8. महाभाष्यम् 9. महाभाष्यम्

**सहायकग्रन्थाः**


1. व्याकरणमहाभाष्यम्, चारुदेवशास्त्री, मोतीलाबनारसीदास वा. 2002
2. वैयाकरणभूषणसार, प्रो. प्रभाकर मिश्र, अरविन्दमिश्र, मकरन्दमिश्र बी 37/45 ए2 विरदापुर वाराणसी
3. परमलघुमञ्जूषा, जयशंकर लाल त्रिपाठी, चौ. कृष्णदास अकादमी, वारणसी
4. वै.सि.ल.मञ्जूषा, आचार्यरामप्रसादत्रिपाठी, सम्पूर्णानन्द सं.वि.वि. वाराणसी
5. समासवृत्तिविमर्श, विसजप्रसाद त्रिपाठी, सम्पूर्णानन्द सं.वि.वि. वाराणसी
6. वाक्यपदीयम्, पं. श्रीरघुनाथशर्मा, सं.सं.वि.वि. वाराणसी
7. भूषणसार-परमलघुमञ्जूषयोः सिद्धान्तानां समीक्षा, डॉ. राममनोहर मिश्र, सं.सं.वि.वि. वाराणसी
8. कारिकावली, आ.लोकमणिदहाल, चौ.सुरभारती प्रकाशन वाराणसी।



– असिस्टेंट प्रोफेसर, व्याकरणविभागः
राष्ट्रियसंस्कृतसंस्थानम्, लखनऊपरिसरः

# बौद्धदर्शने शून्यवादस्य अवधारणा

डॉ. कृष्णा कुमारी

महाकारुणिकः भगवान् बुद्धः सत्त्वानां दुखेभ्यः निवृत्यर्थ तत्त्वदर्शनस्यान्वेषण कृतम्। तत् अन्वेषणं परमाणवादः, परिणामवादः न. अपित दुःखानामात्यान्तिकनिवृत्तिः। दुःखस्य कारणमस्ति, तस्य कारणस्य मूलाधारोऽस्ति अविद्या। अविद्यायाः उद्भवः अयोनिशोमनसिकारात् भवति। यावत् पर्यन्तम् अयोनिशोमनसिकारणस्य निषेधः न भवति, तावत् पर्यन्तम् अयोनिशोमनसिकारस्य निराकरणं न भवति। रागादीनां निमित्तोदग्रहणप्रत्ययानां निषेधोऽपि तस्यालम्बनानां निषेधस्य आधारे एव भवितुमर्हति। अतएव ग्राह्यनिमित्तानां निराकरणार्थ बौद्धपरम्परायां दार्शनिक-प्रस्थानानां प्रवर्तनमभवत्। दार्शनिक-प्रस्थानानि सन्ति- वैभाषिकः, सौत्रान्तिकः, माध्यमिकः, योगाचारश्चेति। यथा

**मुख्यो माध्यमिको विवर्तमखिलं शून्यस्य मेने जगत्।**
**योगाचार-मते तु सन्ति मतयस्तासां विवर्तोऽखिलः॥**
**अर्थोऽस्ति क्षणिकस्त्वसानुमितो बुद्धयेति सौत्रान्तिक।**
**प्रत्यक्षं क्षणभङ्गुरं च सकलं वैभाषिको भाषते॥**

उक्तेषुचतुर्षु दर्शनप्रस्थानेषु शून्यवादः माध्यमिकबौद्धदर्शनस्य एकः विशिष्टः सिद्धान्तोऽस्ति। 'भारहासुत्ते' अस्य बीजमुपलभ्यते। शनैः शनैः उत्तरकाले अस्य सिद्धान्तस्य विकासोऽभवत्। सौत्रान्तिकदर्शनं बाह्यपदार्थाः न स्वीक्रियते। विज्ञानवादे बाह्यपदार्थानां केवलं चित्तरूपेणेव सत्ता स्वीकृतम्। यथा- चित्तमात्रं भो जिनपुत्र यदुत त्रैधातुकम्॥[1]

किन्तु माध्यमिकदर्शने बाह्यान्तरिकयोः पदार्थयोः अस्तित्वं न स्वीकृतम्। तेषां मते सर्वे धर्माः परमार्थतः न सत् संवृत्तितश्चासत् इति। दर्शनस्यास्य मतानुसारं भावानां परमार्थतः सत्ता शाश्वतान्तः तथा च व्यवहारतः असत्ता उच्छेदान्तः एतयोः द्वयोः अन्तयोः परिहारं कृत्वा तैः स्वकीयः अद्वितीयः मध्यममार्गः प्रकाशितः।

**अस्तीति नास्तीति उभेऽपि अन्ता, शुद्धी अशुद्धीति उभेऽति अन्ता।**
**तस्मादुभे अन्त विवर्जयित्वा मध्ये हि स्थानं प्रकरोति पण्डितः॥[2]**

आचार्यनागार्जुनेन प्रतीत्यसमुत्पादस्य स्वकीय-विशिष्ट-व्याख्यायाः आधारेण एव शून्यवादः प्रतिपादितः। सः 'प्रतीत्यः' इति शब्देन शाश्वतान्तस्य तथा च 'समुत्पाद' इति शब्देन उच्छेदान्तस्य परिहारं कृत्वा शून्यतादर्शनस्य स्थापनां करोति। येन प्रतीत्यसमुत्पादेन कार्यकारणभावेन वा माध्यमिकेतराः कार्याणामस्तित्वं प्रतिपादयन्ति। ते हि प्रतीत्यसमुत्पन्नत्वं शून्यत्वं चाभिन्नं मन्यन्ते। अतएवाह- योऽयं प्रतीत्यसमुत्पादो हेतुप्रत्ययानपेक्ष्य अङ्कुरविज्ञानादीनां प्रादुर्भावः, स स्वभावेनानुत्पादः। यश्च स्वभावेनानुत्पादो भावाना सा शून्यता। यथा-

**यः प्रत्ययैर्जायसि स ह्यजातो न तस्य उत्पादु स्वभावतोऽस्ति।**

**यः प्रत्ययाधीनु स शून्य उक्तो यः शून्यतां जानति सोऽप्रमत्तः।।**[3]

अथ च या चेयं स्वभावशून्यता सा प्रज्ञप्तिरुपादाय, सैव शून्यता उपादाय प्रज्ञप्तिरिति व्यवस्थाप्यते। चक्रादीन्युपादाय रथाङ्गानि रथः प्रज्ञप्यते। तस्य या स्वङ्गान्युपादाय प्रज्ञप्तिः, सा स्वभावेनानुत्पत्ति, या च स्वभावेनानुत्पत्तिः, सा शून्यता। सैव स्वभावानुपत्तिलक्षणा शून्यता मध्यमा प्रतिपदिति व्यवस्थाप्यते। यस्य हि स्वभावेननानुत्पत्तिः, तस्य अस्तित्वाभाः, स्वभावेन चानुत्पन्नस्य विगमाभावान्नास्तित्वाभाव इति। अतो भावाभावान्तद्वयरहितत्वात् सर्वस्वभावानुत्पत्तिलक्षणा शून्यता मध्यमा प्रतिपत्, मध्यमा प्रतिपत, मध्यमो मार्ग इत्युच्यते। तदेव प्रतीत्यसमुत्पादस्यैवेता विशेषसंज्ञा शून्यता, उपादाय प्रज्ञप्तिः, मध्यमा प्रतिपद् इति।[4]

यो हि अप्रतीत्यसमुत्पन्नो धर्मः, स न संविद्यते। यथोक्तं शतके-

**अप्रतीत्यास्ति नास्ति कदाचित् कस्यचित् क्वचित्।**

**न कदाचित् क्वचित् कश्चित् विद्यते तेन शाश्वतः।।**

**आकाशादीनि कल्प्यन्ते नित्यानीति पृथग् जनैः।**

**लौकिकेनापि तेष्वर्थान्न पश्यन्ति विचक्षणाः।**[5]

एवं हि उक्तं यत् अप्रतीत्यसमुत्पन्नो धर्मः कश्चिन्न विद्यते। यतोहि प्रतीत्यसमुत्पन्नश्च शून्यः। तस्मादशून्यो धर्मो नास्ति। यत् एतदेवम्, अतोऽस्माकं सर्वधर्माश्च शून्याः, न च परोक्तदोषप्रसङ्गः।[6] अत्र 'शून्यता' इत्यस्यार्थः माध्यमिकैः अभावार्थिका न स्वीक्रियते, अपितु अभावविलक्षणा स्वीक्रियते। यथोक्तम्

**अपरप्रत्ययं शान्तं प्रपञ्चौरप्रपञ्चितम्।**

**निर्विकल्पमनानार्थमेतत् तत्त्वस्य लक्षणम्।।**[7] इति।।

सर्वभावाः निस्वभावाः परमार्थतः सर्वविषयाः शून्याः यतोहि तेषां प्रतीतिः हेतुभिः प्रत्ययश्च सञ्जायते न तु स्वतः परतः, उभयतः वा। उक्तञ्च

**न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः।**

**उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन।।**[8] इति।।

**लंकावतारसूत्रे भगवता बुद्धेन**

सूत्र भगवता बुद्धेन उक्तमस्ति यत् बुद्धया सदसद्विवेचिन्या धिया विविच्छयमानानां निपुणं निरीक्ष्यमाणानां सत्त्वादिना पदार्थाननां स्वभावः सत्त्वमसत्त्वमुभयमनुभवं वेति नावधार्यते न प्रमीयते निश्चीयते। अतो हेतोः भावा निरभिलप्याः सत्त्वेनासत्त्वेन उभयत्वेन अनिर्वाच्या निःस्वभावाः शून्यत्मक वचनीयत्वाद् गगनकमलिनीयत्वाद इति। अनेन प्रकारेण भावाना निःस्वभावता एव शून्यतास्ति। सैव प्रतीत्यसमुत्पादोऽस्ति। अस्मिन् विषये उक्तं यत् कारणं प्रतीत्य यत् कार्यमुत्पद्यते- तद्यथा शालिबीजं

प्रतीत्य पृथिव्यासादि सामग्री च शाल्यङ्कुर उपजायते. न हि तावत् तदेव तदिति शक्यते वक्तुम्। नैव यदेवं बीजं स एव जन्यजनकयोरेकत्वप्रसगात। एवं तावद् यदेव बीजं स एव अङ्कुर इति न युज्यते। न चान्यदपि तत्तस्मात्। नापि बीजादङ्कुरस्यान्यत्वम्, बीजमन्तरेणापि अङ्कुरोदयप्रसङ्गात्। तस्मान्न कारणमुच्छिन्नं नापि शाश्वतमिति शक्यते व्यवस्थापयितुम्।[9] उक्तञ्च ललितविस्तरसूत्रे-

**बीजस्य सतो यथाङ्कुरो न च यो बीज स चौवाङ्कुरः।**

**न च अन्य ततो न चैव, तदेवमनुच्छेद अश्वाश्वत धर्मता॥** इति॥

तदेव च वर्णितमस्ति यथा- सकललोकनाथानामेतत् तत्सद्धर्मामृतं सकलत्रैधातुकभवदुःखक्षयस्वभावं यथोपवर्णितेन न्यायेन एकत्वान्यत्वरहितं शाश्वतोच्छेदवादविगतं च विज्ञेयम्। एतद्धर्मतत्त्वामृतप्रतिपन्नानां श्रावकाणां श्रुतचिन्ताभावनाक्रमात् प्रवर्तमानानां शीलसमाधिप्रज्ञात्मकस्कन्धत्रयामृतरसस्य उपयोगानियतमेव जरामरणक्षयस्वभावनिर्वाणाधिगमो भवति। अथापि कथंचिदिह अपरिपक्वकुशलमूलतया श्रुत्वाप्येतत् सद्धर्मामृतम्, दृष्ट एव धर्मे ने मोक्षमासादयन्ति, तथापि जन्मान्तरेऽपि अवश्यमेषां पूर्वहेतु बलादेव नियता सिद्धिः सम्पद्यते।[10] यथोक्तं शतके-

**इह यद्यपि तत्त्वज्ञो निर्वाणं नाधिगच्छति।**

**प्राप्नोत्ययत्नतोऽवश्यं पुनर्जन्मनि कर्मवत्॥**[11] इति॥

उपर्युक्तकथनैः स्पष्टं भवति यत् शून्यतायाः अर्थोऽभावः नास्ति। यतोहि प्रतीत्यसमत्पादेव शून्यता शब्दार्थः। यस्य सर्वभावस्वभावशून्यता युज्यते। तस्य आर्यसत्यादि लौकिकव्यवहारश्चैतद् सर्वं समञ्जसम्। सर्वे धर्माः शून्या निःस्वभावत्वात्। यद् यद् प्रतीत्यसमुत्पन्नं तत् तु शून्यवादस्य मते लोकव्यवहारे यत् किञ्चित् सत्यं प्रतीयते परमा लोकव्यवहारे बौद्धिकविषयः। बुद्धिः संवृत्तिः "बुद्धिः संवृत्तिरुच्यते" इति वचनात्। यत् संवृत्तिसत्यमस्ति तस्य परमार्थतः सत्ता नैव संभवति। परमार्थतः अर्थात् स्वभावतः सत्ता नैव संभवति। परमार्थतः अर्थात् स्वभावतः स्वतः भावतायाः अभावात् ते विषयाः उत्पादस्थितिभङ्गादयः निःस्वभावाः। यथा आचार्येणोक्तम् -

**उत्पादस्थितिभङ्गास्ति नास्ति हीनसमोत्तमम्।**

**लौकिकव्यवहारस्तु बुद्धेनोक्तो न तत्त्वतः॥**[12]

केचन वस्तुवादिबौद्धदार्शनिकाः परतः प्रत्ययतः वस्तूनामुत्पादं स्वीकुर्वन्ति। तस्मादेभ्यः परभूतेभ्यो भावानामुत्पत्तिरिति परतः उत्पत्तिरिति। नैव हि भावानां परं भूतेभ्यः उत्पत्तिरिति। यस्मात् यदि हि हेत्वादिषु अन्यत्र वा क्वचिद् भावानां कार्याणामुत्पादात्पूर्वं सत्त्वं स्यात्, स्यात्तेभ्यः उत्पादः। न चैवं यदुत्पादात्पूर्वं सम्भवः स्यात्, गृह्यते च, उत्पादवैयर्थ्य च स्यात्। तस्मान्न चास्ति भावानां प्रत्ययादिषु स्वभावः। अविद्यमाने च स्वभावे नास्ति परभावः। भवनं भाव उत्पादः, परेभ्य उत्पादः परभावः, स न विद्यते। तस्मादयुक्तमेतत् परभूतेभ्यो भावनामुत्पत्तिरिति[13] अतएव यस्मात् कर्म कृतं सत् निरुध्यते, न स्वभावेनावतिष्ठते, तस्मात् कर्मणः स्वभावेनावस्थानात् शून्यता चोपपद्यते। न चैवं कर्मणाऽनवस्थाना-दुच्छेददर्शनप्रसङ्गः, अविप्रमणाशपरिग्रहेण कर्मविपाकसद्भावात्। विपाकाभावे हि कर्मणः उच्छेददर्शनं

स्यात्। बीजसन्तानसाधर्म्यपरिकल्पनाभावाच्च नानागति जातियोनिधातुभेदभिन्नश्च पाञ्चगतिकः संसारो विचित्रः सिद्धो भवति। न च शाश्वतवादप्रसङ्गः,कर्मणः स्वरूपेणावस्थानानभ्युपगमात्। कर्मणां च अविप्रणाशः, अविप्रणाशसद्भावात् इति। एवं निरवशेषाविद्यानिद्रापगमाद्विबुद्धेन भगवता यस्मादयं धर्मो देशितः।[14]

आचार्यनागार्जुनेन शून्यतां प्रत्ययजन्यभावात्मकं स्वीकृतम्, न अभावात्मकम्। तदुच्यते-

**अपर प्रत्ययं शान्तं प्रपञ्चौरप्रपञ्चितम्।**

**निर्विकल्पमनानार्थमेतत् तत्त्वस्य लक्षणम्।**[15]

अर्थात् एवमपरप्रत्ययं भावानां यत् स्वरूपं तत् तत्त्वम्। एतच्च शान्तस्वभावमतैमिरिककेशादर्शनवत् स्वभावविरहितमित्यर्थः। अत एव तत् प्रपञ्चौरप्रपञ्चितम्। प्रपञ्चो हि वाक्, प्रपञ्चयति अर्थानिति कृत्वा। प्रपञ्चैरप्रपञ्चितं वाग्भिरव्याहृतमित्यर्थः। निर्विकल्पं च तत्। विकल्पश्चित्तप्रचारः। तद्रहितत्वात् तत् तत्त्वं निर्विकल्पम्। नानार्थोऽस्येति नानार्थ भिन्नार्थम्, न नानार्थः अनानार्थम्, अभिन्नार्थमित्यर्थः।

।भवतु सर्व मङ्गलम्।


**सन्दर्भ-सूची-**

1. दशभूमकसूत्रम्
2. बौद्धदर्शनमीमांसा,पृ-300
3. मध्यमकशास्त्रे उद्धतोऽयं श्लोकः, पृ-220
4. यः प्रतीत्यसमुत्पादः शून्यतां तां प्रचक्ष्महे।
   स प्रज्ञप्तिरुपादाय प्रतिपत्सैव मध्यमा।।
   - मध्यमकशास्त्रम्, 24:18, पृ-220, सम्पादक- द्वारिकादासशास्त्री, प्रका- बौद्धभारती, 1983
   - मध्यमकशास्त्रम्, 24:18, पृ-220, सम्पादक- द्वारिकादासशास्त्री, प्रका- बौद्धभारती, 1983
5. चतुःशतक, मूलमध्यमकशास्त्रे उद्धतोऽयं श्लोकः, म.शा, पृ- 246
6. अप्रतीत्यसमुत्पन्नो धर्मः कश्चिन्न विद्यते। यस्मात्तस्मादशून्यो हि धर्मः कश्चिन्न विद्यते।। म.शा. 24:19, 4-247
7. म.शा, 18:9, पृ-158
8. म.शा. 1:3, पृ-6
9. प्रतीत्य यद् यद् भवति न हि तावत् तदेव तत्।
   चान्यदपि तत् तस्मान्नोच्छिन्नं नापि शाश्वतम्।। म.शा, 18:10, पृ-160
10. अनेकार्थमनानार्थमनुच्छेदमशाश्वतम्। एतत्तल्लोकनाथानां, बुद्धानां शासनामृतम्।। म.शा, 18:11, पृ-161
11. चतुःशतक, 8:22, मूलमध्यमकशास्त्रे उद्धतोऽयं श्लोकः, म.शा, पृ. 261
12. शून्यतासप्ततिः, पृ-3, सम्पादक- आचार्य सेम्पा दोर्जे, प्रका- के.उ.ति.शि.सं.सारनाथ, वाराणसी,1996
13. न हि स्वाभावो भावानां प्रत्ययादिषु विद्यते। अविद्यमाने स्वभावो परभावो न विद्यते।। म.शा, 1:5, पृ-29
14. शून्यता च न चोच्छेदः संसारश्च न शाश्वतम्। कर्मणोऽविप्रणाशश्च धर्मो बुद्धेन देशितः।। म.शा, 17:20, पृ-138
15. मध्यमकशास्त्रम्, श्लोक सं-18:9



अतिथि अध्यापिका, राष्ट्रियसंस्कृतसंस्थानम्, लखनऊपरिसरः

गोमती


27

# बौद्ध-बौद्धतरेषु दर्शनेषु प्रमाणविमर्शः

– टाशी नामग्येल

'प्रमीयतेऽर्थोनेनेति प्रमाणम्' अनया व्युत्पत्या येन पदार्थानां यथार्थज्ञानं स्यात्, तदेव प्रमाणमित्युच्यते। इदमेव लक्षणं प्रमाणस्य सार्थकतां याति, प्रमाणस्य इमामेव व्युत्पत्तिम् आश्रित्य प्रकरणं प्रमाणम् इत्युच्यते। इदमपि पूर्वोक्तं यद् वस्तुनो यथार्थज्ञानं प्रमा तस्योत्पतौ च यद्विशिष्टं कारणं तदेव प्रमाणमित्युच्यते। इदं प्रमाकरणमेव प्रमाणं वर्तते। सामान्यलक्षणमसित। अत्र दार्शनिकसम्प्रदायेषु अधिको मतभेदो दृष्टिगोचरो भवति। बौद्धैः सारूप्यम् अर्थात् अर्थाकारतैव प्रमिते करणम् अथवा प्रमाणं प्रोच्यते।[1] **प्रमाणमविसंवादि ज्ञानमर्थक्रियास्थितिः**।[2] आचार्यदिङ्नागेन विशेषसारूप्यं प्रमाणम् एवं विषयाकारः अर्थनिश्चयः प्रमाणफलमुच्यते।

आचार्यधर्मकीर्तिना प्रमाणलक्षणे अविसंवादिपदं वियोज्य दिङ्नाग-प्रतिपादितं लक्षणमेव समर्थ्यते। तत्त्वसङ्ग्रहकारेण आचार्यशान्तरक्षितेन सारूप्यं तथा योग्यता प्रमाणम् एवं विषयाधिगतिस्तथा संवितिः प्रमाणं मन्यते।[3]

आचार्यमोक्षकरगुप्तेन स्वग्रन्थे तर्कभाषायाम् अपूर्वार्थविषयकारकं सम्यग्ज्ञानं प्रमाणमुक्तम्। एवं बौद्धसम्प्रदाये अज्ञातार्थकम् अविसंवादिज्ञानमेव प्रमाणं मन्यते। बौद्धसम्प्रदाये प्रमाणप्रमाणफलयोरभेदत्वाद् यद्यपि प्रमाणं ज्ञानरूपमेव तथापि विषयाकारितैव तैः प्रमाणं मन्यते। यद्यपि ज्ञानगतं सारूप्यं ज्ञानस्वरूपमेव तथापि ज्ञानविषयाकारत्वम् एका जटिलप्रक्रिया वर्तते। विषयाकारतां याः प्रमात्वेन स्वीकरणमेतदर्थम् आपत्तिजनकं यज्ज्ञाने विषयाकारता तु तदैव समायाति, तदा स विषयः पूर्वमेव ज्ञातः स्यात्। विषयाकारम् अन्तःकरणवृत्तिः प्रमा सांख्ययोगदर्शनाभ्यां पौरुषेयबोधः प्रमाणं मन्यते। सांख्यतत्त्वकौमुद्याः शब्देषु तद् मुख्यसाधनं सा मुख्यवृत्तिर्वर्तते, यस्य विषयो निश्चितरूपेण ज्ञायते, बाधको न स्यात्, अज्ञातश्च न स्यात् एतच्चित्तवृत्त्याः उद्भूतः फलभूतः पुरुषवर्तिबोधः प्रमा वर्तते। अस्याः साधनं प्रमाणमित्युच्यते।[4] एकस्यैव अर्थस्य अनुभूति विविधमनुष्येषु स्व-स्वभावानुसारं विविधप्रकारिकाभाव-स्वभावानुसारं विविध प्रकारिका भवितुमर्हति। अतः केवलम् अनुभूतिरेव प्रमाणं स्वीकर्तुं नो युक्तम्। ज्ञात-व्यापार प्रमाणं स्वीकर्तुमेषां युक्तिरियं यत् अर्थप्रकाशन ज्ञातृव्यापारेण जायते। अतस्तदेव प्रमाणम्, किन्तुज्ञातृ-व्यापारं स्वीकर्तुं नोचितम्, यतो ज्ञातृव्यापारम् अर्थप्रकाशने तदैव प्रमाणं मन्यते, किन्तु तस्य व्यापारो यथार्थवस्तुबोधे कारणं स्यात्। किन्तु यत्र तथार्थवस्तुबोधे अकारणत्वाद् विपरीतज्ञाने एव कारणं स्यात्। तत्र तत्कथं प्रमाणं स्वीकर्तुं शक्यते। भट्टसम्प्रदायानुसारम् अनधिगतं तथा यथावस्थितम् अर्थनिश्चायकं ज्ञानं प्रमाणं मन्यते। यथोक्तं शास्त्रदीपिकायाम् – अनधिगतम् एवं यथावस्थितार्थ-निश्चायात्मकं ज्ञानं प्रमाणमुच्यते।

ज्ञानं स्वयं परोक्षमिति मीमांसकानामियमेव मान्यता वर्तते, किन्तु ज्ञात्रा प्रमाणमुक्तम्। तल्लिङ्गकानुमानेन तस्य ग्रहणं क्रियते। अपरादार्शनिकैः मीमांसायां इयं मान्यता अधिकतया आलोचिता।

जैनदर्शने सर्वप्रथाचार्येण समन्तभद्रेण स्वपरावभासकं ज्ञानं प्रमाणमुक्तम्। स्वपरावभासकं बाधवर्धितञ्च ज्ञानम् आचार्यसिद्धसेनेन प्रमाणं प्रोक्तम्।

पुनरकलङ्काचार्येणापि प्रमाणलक्षणे अविसंवादि-अनधिगत व्यावसायात्मकानि पदानि संयोज्य स्वपरावभासकं तथा अर्थग्राहकं ज्ञानं प्रमाणमुक्तम्। आचार्यविद्यानन्दिना पूर्व सम्यज्ज्ञानं प्रमाणलक्षणं प्रोच्य पुनस्तत् स्वार्थ- व्यवसायात्मकत्वादेव तत्प्रमाणमिति स्वीकर्तु शक्यते।

वेदान्तदर्शने अबाधितविषयकम् अपूर्वम् अन्तःकरणावच्छिन्न चौतन्यं प्रमोच्यते। न्यायानुसारं यद् बुद्धया अभिन्नं ज्ञानमस्ति, तदेव प्रमोच्यते। अतएव तज्ज्ञानम् आत्मगुणाः किन्तु वेदान्तमते ज्ञानचेतनब्रह्मण एव प्रकारः।[5]

यद्यपि अद्वैतवेदान्तमते ब्रह्मतत्त्वम् आत्मत्त्वमेव परमार्थसत, तथापि सत्ताया अपरविषयान् स नोपेक्षते, प्रत्ययवादी अथवा ब्रह्मवादित्वात् अपि तद् व्यावहारिकं बाह्यजगत् सत्तां न निषेधयति। वेदान्तानुसारं सत्तात्रयं स्वीक्रियते - प्रातिभासिकी, व्यावहारिकी, पारमार्थिकी च।[6]

एतासु पारमार्थिकसत्तैव सर्वश्रेष्ठा सा च लौकिकप्रमाणानां विषयो भवितुं नार्हति। किन्तु व्यवहारप्रतिभासिकयोः व्याख्यायै अस्यै प्रमाणमावश्यकं भवति। व्यवहारदशायां वेदान्ते अपि व्यवहारस्तावान्नेव आवश्यकः यावान् अन्यस्मै कस्मैचिद् वस्तुवादिदर्शनाय भवति। द्वयोर्मध्ये भेदस्तु केवलं स एव भेदो यत् व्यवहारजगत् वा दृश्यजगदेव सर्वस्वं मन्यते, किन्तु वेदान्ते उच्यते यद् इदमेव तत्त्वं, तत्तु एतस्मादपि परं वर्तते।

बौद्धदर्शने आचार्यदिङ्नागेन अनधिगतार्थप्रकाशकं ज्ञानं प्रमाणं मन्यते। तेन प्रमाणसमुच्चयस्य टीकायां विलिखितं यत् गृहीत- ग्राहीज्ञानमेव प्रमाणमिति। गृहीतज्ञानविषये न्यायबिन्दुटीकायां धर्मोत्तराचार्येण उक्तं यत् 'अनधिगतविषयकं ज्ञानं प्रमाणं' प्रथमतो येन ज्ञानेन अर्थस्य अधिगतं जायते, तेनैव पुरुषस्य प्रवृत्तिः अर्थप्राप्तिश्च जायते। एकस्मिन्नैव अर्थे नैकज्ञानानां कार्यं न तिष्ठति, अतोऽनधिगतं विषकमेव प्रमाणम्।[7]

एवं प्रमा-प्रमाणयोः सम्बन्धे विविधदार्शनिकमत्याः साकं न्यायमतस्य तुलनात्मकं विवेचनं संक्षेपेण प्रस्तुयते। अयमेव निष्कर्षो जायते यत्तेषु कतिपय समानता कतिपय च असमानता वर्तते। न्यायस्य तथा न्यायेतरमते प्रमायाः करणं प्रमाणं सा च प्रमा यथार्थज्ञानमेव प्रमाणभेदे तु सर्वेषां मतभेदः।

**प्रमाणस्य वर्गीकरणम्**- प्रमाणसम्बन्धे भारतीयदर्शनानां विविधमतं विद्यते। यथा -चार्वकः प्रत्यक्षप्रमाणमेव यथार्थज्ञानसाधनं मन्यते। बौद्ध-जैन-वैशेषिकैः प्रत्यक्षानुमानं प्रमाणं मन्यते। सांख्य - योग-रामानुजः प्रत्यक्षानुमानशब्दाः- इमानि त्रीण्येव प्रमाणानि मन्यन्ते। मीमांसकेषु प्रभाकरमतानुयायिनः प्रत्यक्षानुमानोप- मानशब्दान् एतदतिरिक्तम् अर्थापत्तिमपि मन्यन्ते।

मीमांसकानाम् अपरसम्प्रदायो भट्टानुयायि वेदान्ति अपि उक्तं पञ्चप्रमाणादतिरिक्तम् अनुपलब्धिः अथवा अभावो नामकं प्रमाणापि मन्यते।

पौराणिकः असम्भव तथा ऐतिह्यात्मकप्रमाणद्वयं संयोज्य अष्टप्रमाणानि स्वीकुर्वन्ति। तान्त्रिकास्तु नवमप्रमाणत्वेन चेष्टां स्वीकुर्वन्ति। अत्र ज्ञातव्यं यद् दार्शनिकाः न्यूनातिन्यूनप्रमाणैः वस्तुस्थितिं निर्णयन्ति। ते अन्येषामतिरिक्तप्रमाणानां स्वीकृतप्रमाणेषु अन्तर्भावं कुर्वन्ति। यथा-बौद्धजैनवैशेषिकाः उपमानादीनि अतिरिक्तप्रमाणानि अनुमाने समावेशयन्ति। सांख्ययोगरामानुजाः अर्थापत्तिम् असम्भवञ्च अनुमाने तथा अभावं प्रत्यक्षे अथवा अनुमाने एवम् ऐतिह्यञ्च शब्दप्रमाणत्वेन स्वीकुर्वन्ति। नैयायिकाः अभावं प्रत्यक्षे अर्थापत्तिम् अनुमाने ऐतिह्यञ्च शब्दप्रमाणे समावेशयन्ति।[8] एवं दर्शनेन ज्ञायते यत् प्रमाणसंख्याविषये दार्शनिकैकमतं नास्ति। दार्शनिकसम्प्रदायेषु एकस्मादारभ्य नव यावत् प्रमाणस्वीकरणस्य प्रथा वर्तते। एतेषां विविधमतानां वर्गीकरणं निम्नलिखितरूपेण क्रियते।

1. एकप्रमाणवादः - चार्वाकः।
2. द्विप्रमाणवादः - बौद्धजैनवैशेषिकाश्चात्यदार्शनिकाः।
3. त्रिप्रमाणवादः - सांख्ययोगः।
4. चतुःप्रमाणवादः - नैयायिकाः।
5. पञ्चप्रमाणवादः - प्रभाकरमीमांसकाः।
6. षटप्रमाणवादः - कुमारिलभट्टस्तथा वेदान्ती।
7. अष्टाप्रमाणवादः - पौराणिकाः।
8. नवप्रमाणवादः -तान्त्रिकाः।[9]

**प्रत्यक्षप्रमाणम्**- न्यादर्शने चतुर्पु प्रत्यक्षप्रमाणं सर्वप्रथमम्। न केवलं न्यायदर्शनेऽपितु सर्वेष्वपि दर्शनेषु प्रत्यक्षप्रमाणम् असन्दिधरूपेण स्वीक्रियते। सर्वे अपि भारतीयदार्शनिकाः प्रत्यक्षप्रमाणं मन्यन्ते। इन्द्रियेण प्राप्तोऽनुभव एव प्रत्यक्षज्ञानं वर्तते। अतः अस्यापलोपो विधातुं नैव शक्यते। अस्य निर्विवादमहत्त्वम् अनेनैव सिद्धयति यच्चार्वाकसदृशाः दार्शनिका अपि इदं मन्यन्ते। भरतीयदर्शनानि प्रत्यक्षं तावदेव विचारयन्ति यावत् अनुमानानि प्रमाणानि। एवं प्रत्यक्षप्रमाणं सर्वसम्मतं तथा इदं खलु अनुमानानि प्रमाणानां मूलाधारत्वात् सर्वप्रथमं प्रत्यक्ष-प्रमाणस्योपरि दार्शनिकैः विचारो विहीतः। सामान्यतोऽस्माभिः अनुभवो व्यवहित-अव्यवहिताभ्यां विभक्तुं शक्यते। अव्यवहितानुभवं प्रत्यक्षे व्यवहितञ्च परोक्षम् अनुमानादि वक्तुं शक्यते। मौलिकज्ञानत्वात् प्रत्यक्षं कमपि ज्ञानान्तरं नावतिष्ठते। अनुमानादिभ्यः प्रत्यक्षस्य साहाय्यम् अपेक्षते, किन्तु प्रत्यक्षाय अनुमानादीनां साहाय्यं नापेक्षते।[10]

न्यायदर्शनानुसारम् आत्मा मनसा, मन इन्द्रियेण, इन्द्रियं विषयेण, अर्थेन वा सह सम्पर्क साधयति। यदा आत्मनि समवायसम्बन्धेन ज्ञानमुत्पद्यते।अनेन सुस्पष्टं यत् प्रत्यक्षप्रक्रियायां मनसोऽपि महत्त्वपूर्णं स्थानं वर्तते। यदि मन एव स्थिरं न स्यात् तर्हि प्रत्यक्षज्ञानोत्पत्तये बाधा उपस्थायते। अतः प्रत्यक्षज्ञानाय इन्द्रिय-मनसः सयोगः अनिवार्यः। न्यायदर्शने प्रत्यक्षज्ञाने इन्द्रियैः सह मनःसंयोगस्यालेखो विद्यते। वस्तुतः तद् मनौविज्ञानिकमहत्त्वमेव। न्यायसूत्रकारेण इन्द्रियार्थसन्निकर्षण उत्पन्नम्

अव्यभिचारिनिर्दोषात् संशयविपर्यदोषरहिताद् वाव्यवासायात्मकं निश्चयात्कं ज्ञानं प्रत्यक्षमित्युच्यते। तत्प्रत्यक्षात्मकज्ञानस्य साधकतमं यत् साधनं विद्यते, तदेव प्रत्यक्षप्रमाणमुच्यते। न्यायदर्शनानुसारं घ्राण, रसना, श्रोत्रम्, त्वग् मनश्च-इमानि षडिन्द्रियाणि वर्तन्ते।[12]

साक्षात्कारित्वमिदम् इन्द्रियार्थसन्निकर्षेणैव जायते। इदमेव आधारीकृत्य परवर्ति आचार्यः प्रमाणलक्षणम् "साक्षात्कारिप्रमायाः करणत्वम्" कृतम्।[13]

प्रत्यक्षमपि द्विविधम्-सविकल्पकं निर्विकल्पकञ्चेति। तत्र नामजात्यादिकल्पनाभिः रहितं प्रत्यक्षं निर्विकल्पमित्युच्यते। एवंविधं ज्ञानमालोचनामात्रमुच्यते, ज्ञानोत्पत्तिक्रियायां निर्विकल्पकज्ञानं सर्वप्रथमं जायते। एतेन जैनदार्शनिका अपि सम्मताः सन्ति। जैनदर्शनेन निर्विकल्पं प्रमाणरूपेण न स्वीक्रियते। तस्यास्तित्वं नास्तीति नोच्यते। तद्दर्शननाम्ना व्यवहरति। एतदितिरिक्तं मध्व-वल्लभादयो वेदान्तिनः, भर्तृहरिः तेषाञ्च पूर्ववर्तिनो वैयाकरणाः आचार्या अपि नैतत् स्वीकुर्वन्ति यत् ज्ञानोत्पत्तिप्रक्रियायां सर्वप्रथमं समान्यमात्रम् अवज्ञायते। तदनु किमपि ज्ञानं विशेषण-विशेष्यभावरहितं भवितुम् नैवार्हति। प्रत्येकस्मिन् ज्ञाने विशेषतानाम् अवश्यमेवान्वयः अवतिष्ठते। तत्र तु केवत्वं न्यूनाधिक्यम् अवश्यमेव भवितुमर्हति। अतस्तदनु ज्ञानं सविकल्पकमेव जायते। निर्विकल्पक-ज्ञानस्य अयमेवाभिप्रायः- 'तत्र केवलं न्यूना विशेषता भास्यते'। अत्र ध्यातव्यं यद् यैः दार्शनिकैर्निर्विकल्पकप्रत्यक्षं मन्यते, वस्तुतस्ते सर्वेऽपि केवलं प्रत्यक्षम् अपरोक्षं वा मन्यन्ते।

**अनुमानप्रमाणम्** -

न्यायदर्शनानुसारं ज्ञानप्राप्तेर्द्वितीयं साधनम् अनुमानं वर्तते। अयं शब्दद्वयेन निर्मितः। 'अनुमानम्' शब्दः 'अनु' 'मानम्' इत्याभ्यां सिद्ध्यति। अनुशब्दस्यार्थः पश्चात् 'मान' इत्यास्यार्थः ज्ञानकरणं मन्यते। 'मान' शब्दःकरणार्थे 'मा' धातुना ल्युट् प्रत्यये कृते सिद्ध्यति। एवं सम्मिलितरूपेण अनुमानशब्दस्यार्थः तत् करणं लिङ्ग वा, येन तत्सम्बद्धं लिङ्गज्ञानं भवेत्। अनुमितेः करणमनुमानम्, भाष्यकारवात्स्यायनानुसारं ज्ञातलिङ्गेन तत्सम्बद्धा-ज्ञातार्थानन्तरं ज्ञानकरणमनुमानम्।

**अनुमानभेदाः**-

न्यायदर्शानुसारम् अनुमानं मुख्यतः त्रिविधं मन्यते। पूर्वदृष्टया अनुमानं द्विविधम्। स्वार्थ परार्थञ्च। अनुमानस्येदं विभाजनं तत्प्रयोजनं विचिन्त्य कृतम्। यदा प्रमात्रा स्वस्मै अनुमानं क्रियते तदेव स्वार्थानुमानमित्युच्यते। किन्तु यदा अन्यान् ज्ञापयितुम् अनुमानं क्रियते, तदेव परार्थानुमानमित्युच्यते। स्वार्थानुमाने वाक्यप्रयोगे नावश्यकः, किन्तु परार्थानुमाने पञ्चावयववाक्यानां प्रयोगो नितान्तः आवश्यकः। तत्परार्थानुमानं पञ्चवाक्यैः प्रतिज्ञा-हेतु-उदाहरण-निगमनैः प्रकटीभवन्ति।[14]

चार्वाकान् विहाय सर्वेष्वपि दार्शनिकसम्प्रदायेषु अनुमानप्रमाणस्य स्वीकृतिर्लभ्यते। चार्वाकाः प्रत्यक्षादतिरिक्तम् अन्यप्रमाणं नैव मन्यते। प्रमेयसिद्ध्यर्थं प्रमाणमपेक्षते। यद्यपि चार्वाकाः भौतिकवादिनः। अतस्तदनु प्रत्यक्षप्रमाणेनैव तेषां भूतानां ज्ञानं सम्भवति। अपरप्रमाणानि नैवावश्यकानि, स्थूलभूतज्ञानाय प्रत्यक्षप्रमाणमेव पर्याप्तम्। यद्वस्तूनां ज्ञानं प्रत्यक्षप्रमाणेन न सम्भवति, तेषामस्तित्वं चार्वाकाः न मन्यते।[15]

### बौद्धमतानुसारं प्रमाणम्-

**'मेयाधीना मानसिद्धिः'** अर्थात् प्रमेयाणां निर्धारणं प्रमाणाधीनं भवति। सिद्धान्तोऽयं बौद्धो बौद्धेतराः प्रायः सर्वेऽपि दार्शनिकाः मन्यन्ते, किन्तु बौद्धाचार्याः प्रमेयाधारेण पक्षे प्रमाणानि नियन्त्रयन्ति एवं तन्मते **'मेयाधीना मानसिद्धिः'** सिद्धान्तोऽयं मान्यो भवति। बौद्धमते प्रमाणविषये प्रकारद्वयं वर्तते-

1. स्वलक्षणं 2. सामान्यलक्षणञ्च।

स्वलक्षणं प्रत्यक्षस्य सामान्यञ्चानुमानस्य भवति। स्वलक्षणस्यार्थः **'स्व'** असाधारणम्, 'लक्षणम्' तत्त्वमथवा स्वरूपम्। द्वावेव प्रकारौ विषयस्य भवतः सदृश-असदृशौ, यतोहि तत् सर्वतो व्यापृत्तत्वात् केवलं स्वनिष्ठं भवति। अतःस्वलक्षणं यदा द्वे एव वर्तेते चेत् तद् ग्राहकं प्रमाणमपि द्वे एव भवितव्ये। स्वलक्षणग्राहकं प्रत्यक्षं सामान्यलक्षणग्राहकं ज्ञानमनुमानं वर्तते। नैयायिकानां मीमांसकानामिव बौद्धाः सामान्यविशेषात्मकं न कमपि पदार्थं मन्यन्ते, यतोहि ते सामान्यं विशेषञ्च परस्परम् अत्यन्तं विरोधिनं मन्यन्ते। सौत्रान्तिकमते स्वलक्षणस्य परमार्थसत्ता मन्यते सामान्यलक्षणञ्च सांवृतिक काल्पनिक वा। सामान्यलक्षणस्य परमार्थसत्ता एतदर्थम् अर्थक्रियायां समर्थो भवति। यतस्तस्मात् कारणाज्ज्ञानां स्पष्टकारो लभ्यते। नैयायिकादयः प्रमाणानां संख्याविषययोः सम्बन्धे न कामपि व्यवस्था मन्यन्ते। तनु प्रत्यक्षविशेषमेव नापितु इतरव्यावृत्तमाध्यमेन कल्पितसङ्केतन वस्तुन अर्थसाक्षात्कारार्थकारणत्वात् बौद्धैः इन्द्रियविज्ञानादतिरिक्तम् अन्यविध-प्रत्यक्षमेव प्रत्यक्ष यतोहि निर्विकल्पकं प्रत्यक्षलक्षणं वर्तते- **'कल्पनापोढमभ्रान्तं प्रत्यक्षम्'** प्रत्यक्षज्ञान कल्पना स्वभावरहितं भावतव्यं तच्च अर्थक्रियाक्षमवस्तुनि कथञ्चिदपि विपर्यस्तं भ्रान्तं वा न स्यात्। कल्पनाराहित्यमेव बौद्धानां स्वसाकम् अभिधानस्य (वाचकशब्दस्य) आकारो मिलति चेत सैव कल्पनेति उच्यते। प्रत्यक्षामपि ज्ञानं कल्पनारहितं स्यात् तत्र न केनापि प्रकारेण कल्पनायाः सम्भावना योग्यता वापि नावतिष्ठेत।

तत्र विज्ञानवाद-बाह्यार्थवादयोः द्वयोरेव प्रमाणलक्षणं सामान्यरूपेण सङ्गच्छते, बाह्यार्थवादे बाह्यग्राह्याकार एव सारूप्यो वर्तते, स्वज्ञाने स अर्थज्ञानानुरूपं करोति। अतस्तत् अर्थविसंवादित्वात् प्रमाणं जायते बाह्यार्थश्च प्रमेयो जायते। विज्ञानवादे इदमितोऽपि स्पष्टं भवति, यतोहि तत्र ग्राह्यकारता बुद्धेरेव परिच्छेदो विद्यते। तस्मादेव कारणात् अन्यव्यावृत्त्वात् वस्तुविशेषस्य परिच्छेदो जायते परिच्छेद एव ज्ञानस्य फलस्वरूपम् आत्सवेदनमस्ति। एवं यदा परिच्छेदेनैव आत्मवेदनं व्यवतिष्ठते, तदा स अवश्यमेव फलभूतम् आत्मवेदनस्य साधनम् एवं प्रमाणं मन्यते।[16]

### उपसंहारः -

प्रमाणशब्दोऽयं बौद्धदर्शनं विहाय सर्वैरपि दार्शनिकैः स्वीक्रियते, **'मानाधीना मेयसिद्धिः'** यतोहि सर्वेषां पदार्थानां ज्ञानाय प्रमाणस्याश्यकता जायते। केचित् एकविधं प्रमाणं। स्वीकुर्वते, केचित् द्विविधं, केचित् त्रिविधम्, केचित् चतुर्विधम् केचित् पञ्चविधम्, केचित् षड्विधम्, केचित्सप्तविधम्, केचिच्चाष्टविधं मन्यन्ते। तत्र चार्वाकवादिनः प्रत्यक्षम्, न्यायदार्शनिकाः प्रत्यक्षानुमानोपमानशब्दान् स्वीकुर्वते, वैशेषिका, प्रत्यक्षानुमानम्, भाट्टमीमांसकाः प्रत्यक्षानुमानोपमानशब्दान् स्वीकुर्वते, प्राभाकराः

प्रत्यक्षानुमानशब्दार्थापत्ती: स्वीकुर्वते। वेदान्तिनः प्रत्यक्षानुमानोपमानशब्दार्थपत्तिरर्थानुलब्धिः, पौराणिका एतदतिरिक्तम् असम्भवम् ऐतिह्यञ्चापि स्वीकुर्वते तान्त्रिकाश्च नवप्रमाणत्वेन चेष्टा स्वीकुर्वते, किन्तु एतत्सर्वाण्यपि प्रमाणानि प्रत्यक्षानुमानयोरेव समावेशयन्ति बौद्धाः। तत्रापि प्रत्यक्षे निर्विकल्पकं प्रत्यक्षमेव स्वीकुर्वते। सविकल्पकन्तु ते प्रत्यक्षमेव न मन्यन्ते।

**सन्दर्भः-**

1. न्यायसबिन्दु धर्मोत्तर टीका, प्रत्यक्ष-प्रकरण, पृ. 142 केन्द्रीय तिब्बती अध्ययन विश्वविद्यालय, सारनाथ, वाराणासी, 2010
2. प्रमाणवार्तिक, स्वामी योगीन्द्रानद, पृ. 3, चौखम्बा विद्यभवन, 2005
3. विषयाधिकतश्चात्र प्रमाणफलममिष्यते। स्नवित्तिवा प्रमाणन्तु सारुष्यं योग्यतापिच।। - तत्त्वसङ्ग्रहः
4. शास्त्रदीपिका, पृ. 123
5. वेदन्तपरिभाषा, पृ.17
6. वेदन्तपरिभाषा, पृ.15
7. न्यायबिन्दु, प्रत्यक्ष प्रकरण पृ. 138, केन्द्रीय तिब्बती अध्ययन विश्वविद्यालय, सारनाथ, वाराणासी, 2010
8. न्यायदर्शन का प्रमाणचतुष्टय, पृ. 31
9. न्यायदर्शन का प्रमाणचतुष्ट, पृ. 32
10. न्यायदर्शन का प्रमाणचतुष्ट, पृ. 33
11. न्यायसूत्र, 1/1/1
12. न्यायसूत्र, 1/1/2
13. तर्कभाषा, केशवमिश्र, प्रत्यक्षपरिच्छेद, पृ. 61 सम0-मधुरी हिन्दीव्याख्योपेता, चौखम्बा सुरभारती प्रकाशन, वाराणासी, 2017
14. न्यायदर्शन में प्रमाणचतुष्टय, अभेदानन्द भट्टाचार्य, पृ. 61
15. न्यायदर्शन में प्रमाणचतुष्टय, अभेदानन्द भट्टाचार्य, पृ. 60

16 तर्कभाषा, आचार्यमोक्षाकरगुप्त, पृ. 23/24 अनुवादक आचार्य रघुनाथगिरि, प्राच्य प्रकाशन, वाराणासी, 1969

**संदर्भग्रन्थसंकेतः**


1. न्यायसबिन्दु धर्मोत्तर टीका, प्रत्यक्ष-प्रकरण, पृ. 142 केन्द्रीय तिब्बती अध्ययन विश्वविद्यालय, सारनाथ, वाराणासी, 2010
2. प्रमाणवार्तिकम्, स्वामी योगीन्द्रानन्दः, पृ. 3, चौखम्बा विद्याभवन, वाराणासी, 2005
3. विषयाधिगतश्चात्र प्रमाणफलममिष्यते।

   स्ववित्तिर्वा प्रमाणन्तु सारूप्यं योग्यतापि चा।। - तत्त्वासङ्ग्रहकारिका
4. शास्त्रदीपिका, पृ, 123

5. वेदान्तपरिभाषा, अध्यय-1, पृ. 17, रामकृष्णाध्वरि:, राष्ट्रियसंस्कृतसंस्थानम्, जनकपुरी नेवदेहली, 201
6. वेदान्तपरिभाषा, अध्यय-1, .पृ. 15, रामकृष्णाध्वरि:, राष्ट्रियसंस्कृतसंस्थानम्, जनकपुरी नेवदेहली, 2011
7. न्यायबिन्दु, प्रत्यक्ष प्रकरण पृ. 138, केन्द्रीय तिब्बती अध्ययन विश्वविद्यालय, सारनाथ, वाराणासी, 2010
8. न्यायदर्शन का प्रमाणचतुष्टय, पृ. 31 अभेदानन्द भट्टाचार्य, परिमल पब्लिकेशन्स, दिल्ली, 2019
9. न्यायदर्शन का प्रमाणचतुष्टय, पृ. 32 अभेदानन्द भट्टाचार्य, परिमल पब्लिकेशन्स, दिल्ली, 2019
10. न्यायदर्शन का प्रमाणचतुष्टय, पृ. 33 अभेदानन्द भट्टाचार्य, परिमल पब्लिकेशन्स, दिल्ली, 2019
11. न्यायसूत्र, 1/1/4
12. न्यायसूत्र,1/13
13. तर्कभाषा, केशवमिश्र, प्रत्यक्षपरिच्छेद, पृ. 61सम.-मधुरी हिन्दीव्याख्योपेता, चौखम्बा सुरभारती प्रकाशन, वाराणासी, 2017
14. न्यायदर्शन का प्रमाणचतुष्टय, पृ. 61 अभेदानन्द भट्टाचार्य, परिमल पब्लिकेशन्स, दिल्ली, 2019
15. न्यायदर्शन का प्रमाणचतुष्टय, पृ. 60 अभेदानन्द भट्टाचार्य, परिमल पब्लिकेशन्स, दिल्ली, 2019
16. तर्कभाषा, पृ. 110/112 प्रत्यक्षपरिच्छेद, सम.-मधुरी हिन्दीव्याख्योपेता, चौखम्बा सुरभारती प्रकाशन, वाराणासी, 2017
17. तर्कभाषा, आचार्यमोक्षाकरगुप्त, पृ. 23/24 अनुवादक आचार्य रघुनाथगिरि, प्राच्य प्रकाशन, वाराणासी, 1969

- शोधच्छात्र: बौद्धदर्शनविभाग:
राष्ट्रियसंस्कृतसंस्कृतसंस्थानम्
(मानितविश्वविद्यायलय:)
लखनऊपरिसर:

# शृङ्गारमञ्जरी - सट्टकस्य नाट्यशास्त्रीयमध्ययनम्

- वरुणमिश्रः

'सट्टक' शब्दो द्राविडपरम्परातः प्राप्त इति प्रतिभाति। अयं शब्दो नृत्यबहुलदृश्यविधाया वाचकः। इदं प्राकृत-भाषात्मकमुपरूपकमस्ति। भरतस्य नाट्यशास्त्रे सट्टकस्य विवरणं न प्राप्यते। शारदातनयो भावप्रकाशने सट्टं नृत्यभेदात्मकममन्यत्। काव्यानुशासने हेमचन्द्रः सूचयति यत् सट्टकस्य विरचना एकयैव भाषया भवति। तथाहि-

**'विष्कंभकप्रवेशकरहितो वस्त्वेकभाषया भवति।**

**अप्राकृतसंस्कृतया सट्टठको नाटिका-प्रतिमः॥'**[1]

राजशेखरः सट्टकं नाटिकायाः सदृशममन्यत्, यस्मिन् प्रवेशक-विष्कम्भकौ न भवतः-

**''सो सट्टओ ति भणइ दुरं जो णाडिआई अणुहरइ।**

**किं अण एती पबेसअबिक्कभाई ण केवलं होंति।''**[2]

अङ्कस्य स्थाने सट्टके जवनिका भवति। साहित्यदर्पणानुसारेण सट्टकं पूर्णतया प्राकृतात्मकमेव भवति। प्रायशो नायिकायाः नाम्नैव सट्टकस्य नाम भवति। एतस्य कथानकं कल्पितं भवति, अपि चैतस्य नायकः प्राख्यातो धीरललितश्चोक्तः। सट्टकस्य नायिका सङ्गीतादिकलासु पारङ्गता भवति। अस्य प्रमुखो रसः शृङ्गारः कथ्यते।[3]

विश्वेश्वरपाण्डेयस्य रचनासु 'नवमालिकानाटिका' 'शृङ्गारमञ्जरी' सट्टकं च प्रमुखे स्तः। शृङ्गारमञ्जर्या भाषा- शैली प्रसादगुणेन सम्पन्नाऽस्ति। अस्मिन् महाराष्ट्र शौरसेनी भाषयोः प्राधान्यमस्ति। कतिपयस्थानेषु मागधीभाषायाः प्रयोगो वर्तते। कविः सट्टके नाटकीयसन्ध्यङ्गानां समावेशं कुशलतयाऽकरोत्। अस्या उद्धरणानि 'अलङ्कारकौस्तुभे' 'रसचन्द्रिकयोः' च प्राप्येते।

शृङ्गारमञ्जर्या प्रारम्भे सूत्रधारीं  नाट्या सह सट्टकमभिनेतुं वाञ्छति-

**'सुघडिअ-एमत्त-पत्ता विहाउअ-संटबिअ सअलंगा।**

**परम-चमक्किदि-जण्णी तस्स अ सिंगारमंजरि त्ति किदी॥'**[4]

प्रथमे जवनिकान्तरे राजा स्वप्न एकां रूपमतीम पश्यत्, यस्या सुरूपतां स विदूषकं कथयति। विदूषकस्य स्वप्नो राजशेखरस्य भाविचक्रवर्तिसाम्राज्यसूचकोस्ति; यतोऽयं स्वप्ने विदूषको राजानमेरावत गणे उपविशनतं पश्यति। राजा तां रूपवतीं प्राप्तुमिच्छति। राजा तु भयभीतोऽस्ति। विदूषको वसनततिलकया वार्ता करोति, येनाऽयं स्पष्टो जातो यत् सा राज्ञः चिर व्यथाया वातमिश्रृणोत्। रान्तो दासी शृङ्गारमञ्जायश्चित्र-निर्माणस्य प्रार्थनां करोति। चित्रं दृष्ट्वा सा कथयति यत् सैव मम प्रियसखी शृङ्गारमञ्जरी अस्ति या

अन्तःपुर एव स्थिताऽस्ति। दासी शृङ्गारमञ्जर्या एकं पद्यं राजानं निवेदयति, यस्मिन् शृङ्गारमञ्जरीं महाराजं प्रति स्व प्रेमभावानां व्यनक्ति। तस्याः समीपे सन्देशं नेतुं वसन्ततिलका महाराजस्यानुमति याचयति।

द्वितीये जवनिकान्तरे महाराजस्य हस्ते नायिकायाश्चित्रमस्ति। सा शृङ्गारमञ्जरी अन्तःपुरे देव्याः संरक्षणेऽस्ति। सर्वे मदनपूजाकृते गच्छन्ति। विदूषकेन सह वसन्ततिलकाया विवादो जायते, यः शास्त्रीयविवादस्य रूपं धारयति। महाराज्ञी तयोर्विवाद-निर्णयार्थं शृङ्गारमञ्जरी निर्णायकस्य पदे नियोजयति। शृङ्गारमञ्जरी रसशास्त्रस्य विवादं शृणोति। अस्मिन्नवसरे सा राज्ञा मदनपूजामारब्धुं प्रार्थनां करोति। महाराजः शृङ्गारमञ्जरी च समीपतः परस्परं सानुरागमवलोकयतः। महाराज्ञीं प्रति द्वयोः प्रेम्णोऽभिज्ञानं जायते। विदूषकस्य बसन्ततिकायाश्च मेलनमवरुद्धं जायते। उभौ बन्दीगृहे स्थापितौ। अनेनैव प्रकारेण शृङ्गारमञ्जरी अपि अज्ञातस्थाने बन्दीकृता तिष्ठति।

तृतीये जवनिकान्तरे विदूषको वसन्ततिलकाया सहमिलति। सा महाराजं सन्देशं ददाति यत् यन् माधवीलताया मण्डपे महाराजस्तया शृङ्गारमञ्जर्या विरहतापोऽसह्योऽस्ति। साऽस्मिन्नाश्वासने जीविताऽस्ति यन् माधवीलताया मण्डपे महाराजस्तया सह मिलिष्यति। इतो राजा विदूषकश्च गच्छतः। वसन्ततिलका शृङ्गारमञ्जरीमानयति। महाराजो नायिकां स्व प्रेमाश्वासनं प्रयच्छति।

चतुर्थे जवनिकान्तरे राजा महाराज्ञयो रूपलेखायाः क्रूर-व्यवहारेण अतिसन्तप्तो भवति। कारागारान्मुक्तं विदूषकं राजा शृङ्गारमञ्जर्याः समाचारं पृच्छति। विदूषकः कथयति यत् पार्वत्या अर्चनं कुर्वती महाराज्ञी दिव्यवाचं श्रुतवती यत् पत्युः सेवैव पतिव्रताया धर्मोऽस्ति। एतां वाचं श्रुत्वा महाराज्ञी तां वसन्ततिलकां च कारागृहान् मुक्तवती। अथ महाराज्ञी शृङ्गारमञ्जरी उपहारस्वयपत्वेन प्रस्तौति। चक्रवर्तिविवाहान्तरं च राजरूपत्वेनाऽभिनन्दितः सन् सर्वेषां मङ्गलस्य कामनां करोति।

प्रस्तुत सट्टकस्य नायको राजशेखरः शृङ्गारमञ्जरी नायिकाऽथ च रूपलेखा ज्येष्ठा नायिका एवमेवान्यान्यपि पात्राणि यथावश्यकतया सन्ति। राजशेखरस्य चरित्रं सट्टकस्य नायकाऽनुरूपेण चित्रितमस्ति। स निश्चिन्तः, फलासक्तः, सुखी, कोमलस्वभावत्वेन च नाट्यशास्त्रय दृष्ट्या 'धीरललितो' नायकोऽस्ति, तथाहि-

**''निश्चिन्तो धीरललितः कलासक्तः सुखी मृदुः।''**[5]

सः महाराज्ञयो रूपलेखाया सम्मुखे नवनायिकां प्रति प्रेम न दर्शयति। अतः सः दक्षिणो नायकः सिद्ध्यति। तथाहि-

**'स दक्षिणः शठो धृष्ठः पूर्वां प्रत्यन्ययाहतः।'**[6]

सः ज्येष्ठां नायिकां प्रति हृदयेन सद्व्यवहारं दर्शयति। तां प्रत्यस्य मनसि आदरभावोऽप्यस्ति। सः दैवाऽपेक्षया कर्त्तव्येष्वधिकं विश्वसिति।

नायिका शृङ्गारमञ्जरी अवन्तिदेशस्य राज्ञो जटाकेतुनः पूज्योस्ति। ज्योतिषी उक्तवान् यदस्याः

पतिश्चक्रवर्ती भविष्यति। इयं परकीया मुग्धा नायिकाऽस्ति। इयं नायकं रन्तुं यदा लताकुञ्जे गच्छति, तदा राजानं दृष्ट्वा लज्जां करोति। राज्ञी रूपलेखा नायिकामिमामसाधारण सुन्दरी मनुते। तस्या मुखान्निःसृतवचनं वक्रार्यगर्भितमस्ति। एषा चतुरानायिकास्ति, या स्वप्रियमाकृष्टुं समर्थाऽस्ति। देव्याः शब्देषु तस्यां रसनिरूपणस्य क्षमताऽस्ति, तथाहि-

**'जदि अतिी अंतेउर-चरिणी सिंगारमंजरी रस-णिरुअणे कअ-परिस्समा**

**अणेव-वारं कअ-परिक्खणा अ। सा उण अउव्व-लावण्ण-णिहाण**

**हूअ त्ति अज्जउत्तस्य णअणमग्गादो मए पअत्तेण रक्खी-आदि'**7

तस्या विरहवेदनायाः स्वरूपं प्रस्तुतमस्ति-

**'आजम्मं परतंतदा असुलहे णेहाणुबंधो जणे**

**पाणा पत्थर-कक्कसा ण मरणोवाओ वि पाविज्जइ।**

**इट्ठो सो वि जणो णुराअमरिओ जंसो वि सावग्गहो**

**एआरिच्छ-कअत्थणे ण मरिअं णो जीविअं तीरइ।।'**8

सा कथयति यत् प्रेमानुकूलव्यवहारेण स्वयमेव सर्वं प्रकटी भवति। दर्शनं तु कृत्रिमतापूर्णं भवति-

**'अणुऊल आअरिअं संते पेम्मं पआसेइ।**

**जं सह वढावणिज्जं तं चिअ साहेंति आहासं।।'**9

रूपलेखा ज्येष्ठा नायिकास्ति। इयं स्वीया मध्यास्ति- **'समप्रधानलज्जामदना मध्या।'**10 सा शिष्टाचारिणी अस्ति तथा च राज्ञः समादरं करोति। महाराजाय देवी सञ्जीवनीलविका अस्ति।11 सा शृङ्गारमञ्जर्या रूपस्य प्रशंसां करोति। एषाऽति धार्मिका पवित्रा चास्ति। सा कथयति यन्निरपराध बालामकारणं कष्टं प्रदातुमुचितं नास्ति-

**'धम्मो पइव्वआणं उवअरणं णवर दइअस्स।**

**बाला वि अणराहं कअत्थणे एतिए ण अणुरुआ।।'**12

यथा प्रमुख-पात्र सङ्घटना कृताऽस्ति तथैवान्यानि सविदूषक-सहायानि सर्वाण्येन सुमधुर-कथा-विस्तारकाणि पात्राणि साम्यग्योजितानि सट्टकस्य मुख्यरसस्याऽऽस्वादने सहकारिती विदधति।

शृङ्गारमञ्जर्या शृङ्गाररसः प्रधानोऽस्ति। राज्ञः स्वप्नदर्शन एव नायिकायामनुरागो जायते। द्वितीये जवनिकान्तरे विदूषकस्य वसन्ततिलकायाश्च शास्त्रीयवाद-प्रतिवादे शृङ्गारमञ्जरी दृष्ट्वा राजाऽलौकिक आनन्दमनुभवति। नायिकां दृष्ट्वा नायकस्य मार्मिकाऽनुभूतिर्द्रष्टव्याऽत्र-

**'मग्गाई दो वि ण अणाइ सुआ सरस्मि**

**अंगं पहिण्ण-पुल-अकुर-दंतुरं मे।**

**अप्पा वि जेण जिणसो-अणुहूअ-ब्रह्मा-**

**णंदोव्व सव्व-विसअंतर-णाण-सुणो।।'[13]**

राज्ञः स्निग्ध-दृष्ट्या नायिकाऽभिषिक्ता प्रतीयते। तस्या स्वागतो वितरस्ति-

**'संकावसुम्मुलिवएहि महब्भुएण**

**विप्फारिएहि णअणेहि णिओ वि दिट्ठो।**

**अण्णं च लेण वि सिणेह-विलक्खणेंहि**

**छित्तो म्हि केहि वि विलोअण-विब्भमेहि।।''[14]**

राजानं दृष्ट्वा नायिकाया मुखे स्वेदः, शरीरवेगः, कम्पनं भवति। मुखान्निश्वासो च निस्सरति। प्रकटितसात्विकभावैः शृङ्गारोऽभिव्यज्यते।

चतुर्थजवनिकान्तरे विप्रलम्भशृङ्गारस्य व्यञ्जना दरीदृश्यते। स्वप्ने एकां तरुणीं दृष्ट्वा राज्ञो मनस्यैतस्यामा सक्तिजायते। इदं पूर्वरागस्य स्वरूपमस्ति। नायिकाऽपि विरहिणी चाऽस्ति। सा पाण्डुवर्णं भजते। स्वप्नवर्णनान्तरं स्पृहा, तापः, विश्वासः, उन्मादश्चेमा दशा नायके जायन्ते। प्रभातिरेकेण तस्य ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि चेष्टा हीनानि जातानि। तस्याकुलता दृष्ट्व्या-

**'बाहुज्झरो वि लिहिअं लिहिअं जरेह,**

**आपुंसइ क्खलइ ताइ मणं भरंतं।**

**णो लेहणी परम-वेविर अंगुलिम्मि,**

**पाणिम्मि ठाइ कहमेत्थ अ किं लिहिस्सं।।'[15]**

नायिकायाः रत्याः आलम्बनं तु मधुरोदारगुणो नायकोऽस्ति। मादकोद्यानं यदुद्दीपकत्वेन विप्रलम्भ-शृङ्गारं वर्धयन्ति। असह्यविरहवेदनया नायिका स्वप्राणान् त्युक्तुमिच्छति। अतोऽत्र अभिलाषा, चिन्ता, गुणकीर्तनम्, उद्वेगः, विलापः, उन्मादः, व्याधिः, जडतामरणं चेत्यवस्था वर्णिताः सन्ति। अत्र विप्रलम्भस्य मार्मिको व्यञ्जनाऽस्ति। सट्टके हास्यरसस्याऽभिव्यञ्जना दृश्यत एव। यत्रतत्राऽद्भुतरसस्य समावेशोप्यस्ति। नायिका आश्चर्यसञ्जीवन्यस्ति, यथोक्ता-

**'परम चमक्किदि- जण्णी।।'[16]**

**'भोदी रेहइ वीरुअ व्व अवरा अच्छेर संजीवणी।।'[17]**

अस्तु, वक्तुमिदं शक्यते यद् विश्वेश्वरकवेरिदं सट्टकं प्राकृतवाङ्मये महत्त्वपूर्णं स्थानं भजते।

सन्दर्भ-ग्रन्थाः-

1. काव्यानुशासनम्, पृ. 444
2. कर्पूरमञ्जरी, प्रथम जवनिका, पृ. 9
3. साहित्यदर्पण: 6/276-77
4. शृङ्गारमञ्जरी, प्र. जवनिका 19, पृ. 6
5. दशरूपकम्, द्विप्र., 3, पृ. 114
6. दशरूपकम्, द्विप्र. 6, पृ. 122
7. शृङ्गारमञ्जरी, भूमिका, पृ. 41, पाद-टिप्पणी 5, चौखम्भा सुरभारती प्रकाशन
8. तदेव, तृ. जवनि., 56, पृ. 88
9. तदेव, तृ. जवनि., 59, पृ. 89
10. रसचन्द्रिका, पृ. 5
11. शृङ्गारमञ्जरी, द्वि जवनि. 20, पृ. 42
12. तदेव, च. जवनि. 14, पृ. 100
13. तदेव, द्वि. जवनि. 37, पृ. 57
14. तदेव, द्वि. जवनि. 38, पृ. 58
15. तदेव, द्वि. जवनि. 35, पृ. 26
16. तदेव, द्वि. जवनि. 9, पृ. 6
17. तदेव, द्वि. जवनि. 40, पृ. 59

- शोधच्छात्रः

वी.एस.एस.डी. कॉलेज, कानपुर

# उपनिषद्वाङ्मये भारतीयसंस्कृति यज्ञव्यवस्था च

- सुमेरीलालः

भारतीयसंस्कृतेरुपनिषद्वाङ्मये महत्त्वपूर्णं स्थानं वर्तते। अस्ति खलु विदितमेवैतद्विदुषां यच्चतुर्वर्गफलप्राप्त्यर्थं हि मानवस्य जन्म। चतुर्वर्गस्तु वेदादिसच्छास्त्रविश्रुतो धर्मार्थकाममोक्षलक्षणः। विद्यैकसचिवकर्मपरिशीलन् फलकवैराग्यवैशद्यनिष्पाद्यश्च तदधिगम इति सर्वेऽप्यागमिनः स्वीकुर्वन्ति। विद्या च पुनर्द्विविधा, अपरा परा चेति, यत्रेदमुदाहृतं भवति-

**तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षाकल्पो व्याकरणं।**
**निरुक्तं छन्दो ज्योतिषमिति।। अथ परा यया तदक्षरमधिगम्यते।।**

ऐहिकधर्मार्थकामसाधनार्थपरत्वेनर्ग्वेदादयोऽप्रधानवृत्या 'अपरे'ति पदेन, मुख्यवृत्या मोक्षैकसाधनीभूतब्रह्मविधाधिगमहेतुत्वेन च पुनरूपनिषदः 'परे'ति पदेन व्यपदिश्यन्तेतरामिति व्यक्तमेव विदुषाम्। संजेगीयते च ब्रह्मविद्येत्यपरसंज्ञयापीयमुपनिषद्विद्या। उप-नि-पूर्वकस्य विशरणगत्यवसादनार्थकस्य षद्लृधातोः क्विबन्तस्य रूपमिदमुपनिषत्। उप-उपगम्य गुरुमाचार्यमुपलभ्य वा ब्रह्मोपदेशं, तन्निष्ठतया परिशीलयतां दृष्टानुश्रविकविषयवितृष्णानां मुमुक्षूणामविद्यादेः संसार-वीजस्य, नितरां निश्शेषेण वा सद्-अवसादयित्री विशरणकर्त्री तद्द्वारा ब्रह्मोपगमयित्री या सोपनिषदिति तद्व्युत्पत्यर्थनिबन्धना सती ब्रह्मविद्यापि सा, इति वचोऽपि नितरां रोचिष्णु खलु। न चोपनिषदामेव पराविद्यात्वं कथं? वेदेष्वपि बहुत्र तदुपदेशश्रवणात्वेषामपि पराविद्यात्वं किन्तु खलु सोपपत्तिकमिति वाच्यम्, वेदेष्वप्राधान्येन उपनिषत्सु च पुनः प्राधान्येन मुख्यवृत्या च तदुपनिबन्धनात्। वेदेषु प्राधान्येनाभ्युदयफलकस्य, कर्मोपासनाविज्ञानसाधनस्य, भगवत्परब्रह्मप्रभाप्रत्यायकस्य, धर्मार्थकामरूपत्रिवर्गस्यैवोपदेशः। उपनिषत्सु तु मुख्यवृत्या ब्रह्मविद्यैकसाधनस्य त्रिविधदुःखविप्रमोक्षस्य मोक्षस्यैवोपदेश इति उपनिषदामेव परा विद्येति पदेन प्राधान्येन व्यपदेशो यौक्तिको न वेदानाम्। एतावता उपनिषदां वैशिष्ट्येन ब्रह्मविद्यात्वं संसाध्यते, न जातु वेदानां तद्वत्त्वं तावता परिबाध्यत इत्यवधेयम्।

केचन केवलाऽद्वैतप्रतिपादिका उपनिषद् इति स्थापयन्ति। एके विशिष्टाद्वैतविधा इमा इत्यभ्युपगच्छन्ति। अपरे शुद्धाद्वैतपरा इति व्याहरन्ति। अन्ये शुद्धद्वैतोपदेशिका इति मन्यन्ते। परं वैदिकास्तु त्रैतवादसाधिका एव ता इति सिद्धान्तयन्ति। तर्कयन्ति च सञ्जाघटीति तासां त्रैतवादपरत्वं वेदमूलकत्वात्। वेदमूलकत्वे त्वासां न केऽपि वादिनः प्रतिवादिनो वा संशेरते। सन्ति खलु उपनिषदो वेदमूला इति सर्वेषामेव निर्विवादमभिमतम्। एवं सति, उपनिषद्भिरपि प्रस्फुटं तद्वादपराभिरेव भवितव्यं यद्वादपरा सन्ति वेदाः।

वेदाश्च त्रैतवादपरा एव। त्रैतवादं हि ते बलवत्पुष्णन्ति, यत्रेदमाम्नातं भवति :-

**उद्वयं तमसस्परि ज्यौतिष्पश्यन्त उत्तरम्।**
**देवं देवत्रा सूर्यमगन्म ज्योतिरूत्तमम्।।**

(वयं) मोक्षाभिलाषिणः (तमसः) तमः प्रधानायाः प्रकृतेः, चित्प्रकाश–वैधुर्येण तमः पदमत्र प्रकृतिमभिधत्ते। (परि) उपरि (उत्तरं) उत्कृष्टतरं प्रकृत्यपेक्षयेति भावः। (ज्योतिः) चिद्रूपमात्मानं (उत्पश्यन्तः) उत्कर्षेण ज्ञानदृग्गोचरीकुर्वन्तः। आत्मानं याथात्म्यरूपेण साक्षादनुभवन्तः। (देवत्रा) दिव्यपदार्थेषु (उत्तमं) सर्वोत्कृष्टं श्रेष्ठं (सूर्यं) प्रकाशात्मक (देवं) दिव्यं ज्योतिः ज्योतिः स्वरूपं शुद्धबुद्धात्मकं परं ब्रह्मेति यावत् (अगन्म) अधिगच्छेम प्राप्नुयामेति यावत्। अत्र स्पष्टं, तमः पदेनाचेतना प्रकृतिः, तदुत्कृष्टतरत्वेन चिदात्मको जीवः, प्रकृत्यपेक्षया यदुत्कृष्टतरत्वं च तरपा द्योत्यते, तदनन्तरं, प्रकृतिजीवेत्युभयापेक्षयोत्कृष्टतमत्वम् 'उत्तमं ज्योतिः' इति तमविधानेन ब्रह्मणः श्रेष्ठत्वं तत्सद्भावोऽपि ध्वनितो वेदितव्यः। तावतैव त्रैतवादपरत्वमपि वेदानां सुतरां प्रस्फुटमिति। तथाहि–

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति॥**

तदेवं सति वेदानां त्रैतवादपरत्वे, नूनमुपनिषद्भिरपि त्रैतवादपराभिरेव भवितव्यं वेदमूलकत्वाभ्युपगमात्तासाम्। ईशोपनिषद् आद्येन 'ईशावास्य' मित्यादिवचनेन सुभृशं ध्वन्यते। तत्र ईशेतिपदेनेश्वरस्य, जगदिति पदेन जडजङ्गमार्थ केन भोग्यायाः प्रकृतेः, 'भुञ्जीथा' इति क्रियापदेन कर्त्तुर्भोक्तुर्जीवस्य च सङ्केतमीश्वरो जीवः प्रकृतिरिति पदार्थत्रयस्य सुतरां सद्भावः प्रबोधितो भवति। एवं दरीदृश्यते तास्वन्यत्रापि भूयस्सु स्थलेषु त्रैतवाद एव समादृतः इतित्रैतवादिनो व्यवस्थापयन्ति।

तदासु सर्वासु वेदान्तापरनामधेयासु, 'ईशोपनिषद्' हि खलु मूलभूता। तस्या इदमादिमं वचनम्–

**ईशावास्यमिदं ँ सर्वं यत्किञ्च जगत्यां जगत्।**
**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम्॥**

ब्राह्मणभागस्य परिशिष्टभागरूपाणि आरण्यकानि हि नाम गद्यपद्यमयानि, आरण्यकानां वानप्रस्थानामऽध्ययनाध्यापनस्वाध्यायपराणि यज्ञयागादिविधिविधायकानि शास्त्राणि। अरण्येऽध्ययनादेवेमानि आरण्यकानीति व्याख्यायन्ते। "अरण्य एव पाठ्यत्वादारण्यकमितीर्यते" इत्युक्तेः। एषु वर्णाश्रमधर्माचाराः याज्ञिकरहस्यानाञ्च मीमांसा सन्दव्याः। आरण्यकानां दशानिखिलं विश्वमेतद यज्ञमयम्। केवलं, देवतामुद्दिश्य द्रव्यत्यागमेव यज्ञत्वेन आरण्यकानि नाभिनन्दन्ति। एषां नयेन, यज्ञादिकर्मकाण्डोपनतस्वर्गादिफलस्य क्षयिष्णुतया न तदात्यन्तिकसुखस्य जनकम्। न च कश्चिद् ज्ञानमार्गेणैवात्यन्तिकसुखमवाप्तुमर्हति केवलेन, नापि केवलेन कर्ममार्गेण।

तेषां नयेन ज्ञानकर्मसमुच्चय एव आत्यन्तिकसुखं समुच्चिनोति इति। सोऽयं ज्ञानकर्मसमुच्चयसिद्धान्तः आरण्यकेष्वेव प्रागङ्कुरितः, पश्चाद् वेदान्तेषु पुष्पितः फलितश्चावगम्यते। शतपथब्राह्मणेऽपिः–

"स्वाध्यायो वै ब्रह्मयज्ञः। प्रिये स्वाध्यायप्रवचने भवतः, युक्तमना भवति, अपराधीनः, अहरहरर्थान् साधयते। सुखं स्वपिति परमचिकित्सक आत्मनो भवति इन्द्रिय संयमश्च। एकात्मता च प्रज्ञा बुद्धिः. .प्रज्ञा, वर्धमाना चतुरो धर्मान् ब्राह्मण्यमभिनिष्पादयति।"

"यज्ञो वै श्रेष्ठतमं कर्म"

गोमती

ऐतरेयारण्यकमेतत्पञ्चविभागैर्निबद्धम्। तत्र प्रथमे भागे पञ्चाध्याया, द्वितीयाध्याये सप्त, तृतीये द्वौ, चतुर्थे च एकः, पञ्चमे त्रयः। सर्वे सम्भूय अष्टादशाध्यायाः। अध्यायाश्च पुनः खण्डैरनुस्यूताः। प्रथमाध्याये (आरण्यके) गवामयन-महाव्रतयोः प्रातर्माध्यन्दिनसायं सवनानाञ्च वर्णनम्। द्वितीयारण्यके चतुरध्यायादारभ्य षडध्यायपर्यन्तं ऐतरेयोपनिषद्। अवशिष्टारण्यकेषु उक्थादिविवेचनम्। तृतीयारण्यके निर्भुजप्रतृणसंहितायाश्च भेदविवेचनम्। स्वर-स्पर्श- ऊष्म-वर्णानां चर्चा। चतुर्थे महानाम्न्यृचां सङ्कलनम्। पञ्चमे महाव्रतसवनानाञ्च विवरणपुरस्सरं नैष्कैवल्यविवेचनम्।

ऋग्वेदस्यापरमारण्यकं शाङ्खायनं नाम। यत्कौषीतकिनाम्नाऽप्याख्यायते। आरण्यकमेतत्पञ्च-दशाध्यायैर्निबद्धम् सप्तत्रिंशदुत्तरशतजण्डात्मकम्। अस्मिन् आरण्यके शुनः शेप-अहिल्या-खाण्डव-कुरुक्षेत्र-मत्स्य-उशीर-काशी-पञ्चाल-विदेहादीनामुल्लेखोऽपि दृश्यते।

**यत्पुरुषेण हविषा देवा यज्ञमतन्वत।**

**वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः॥**

शुक्लयजुर्वेदस्योभयोः शाखयोर्माध्यन्दिनकाण्वाभिधयोः आरण्यकमपि मान्ध्यन्दिनारण्यकं, काण्ववृहदारण्यकमिति आरण्यकद्वयं प्रसिद्धम्। एतयोः प्राधान्येन यज्ञरहस्यवर्णनपुरस्सरं आत्मतत्त्व-ज्ञानस्याप्युपदेशोऽतीव मार्मिकः उपलभ्यते। अनयोर्द्वयोरपि वृहदारण्यकयोः भूयान् भेदो नास्ति। महर्षियाज्ञवल्क्यस्य राज्ञो जनकस्य च गाथा उभयत्र गुम्फिता। गार्गी-मैत्रेयीनाम्नोर्ब्रह्मवादिन्योर्विवरणमतीव मनोहरं अस्ति। सन्यासाश्रम- विधानमतिचारुतया प्रतिपादितम् :-

**आयुर्यज्ञेन कल्पताम्। चक्षुर्यज्ञेन कल्पताम्॥**

**श्रोत्रं यज्ञेन कल्पताम्। प्राणो यज्ञेन कल्पताम्॥**

**पृष्ठं यज्ञेन कल्पताम्। यज्ञो यज्ञेन कल्पताम्॥**

**प्रजापतेः प्रजाऽअभूम।**

**स्वर्देवाऽअगन्मामृताऽअभूम्॥**

सायणाचार्यमहाभागेन आन्ध्रपाठं स्वीकृत्य तस्यैव व्याख्या कृता। आरण्यकान्तरसमाना एव विषयाः प्रायशोऽत्रापि प्रतिपादिताः।

**अयं यज्ञो भुवनस्य नाभिः।**

सामवेदस्य जैमिनीयशाखाया, जैमिनीयोपनिषद्ब्राह्मणमेव 'तवलकारारण्यक' नाम्ना प्रसिद्धम्। अस्मिन् ब्राह्मणे ब्राह्मणारण्यकोपनिषदिति त्रयोऽपि अनुस्यूताः सन्ति। अस्मिन् साममन्त्राणां व्याख्या अत्यन्तशोभना कृताऽवलोक्यते।

अथर्ववेदस्य नाद्यावधि एकमपि आरण्यकमुपलब्धम् विदार्थबोधे ब्राह्मणानिवदारण्यकान्यपि अतीव सहायभूतानि इत्यत्र नास्ति संशयः। अत एव आरण्यकानि 'रहस्य' ग्रन्थाः इति नाम्नापि स्मर्यन्ते। तथाहि- **''ईजानाः स्वर्गं सन्ति।''**

श्रीमद्भगवद्गीतायां भगवान् श्रीकृष्णोवाच- हे अर्जुन!

**''यज्ञानां जपयज्ञोऽस्मि''**

अपि च :-

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति।।**

''एवमेव विदित्वा मुनिर्भवति। एवमेव प्रवाजिनो लोकमिच्छन्तः प्रव्रजन्ति। एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते। किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति। ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचार्या'' (4/4/22) इति।

तदेवं, यथा गृहस्थाश्रमिणां यज्ञयागादि विवरणं ब्राह्मणग्रन्थेषु तथा वानप्रस्थाश्रमिणां यज्ञादिमहाव्रतानां होत्रृणाञ्च विवरणं आरण्यकग्रन्थेषु सम्पन्नम्। ब्राह्मणग्रन्थानामिवारण्यकानामपि भाषाशैली अतीव सरला, मधुरा, संक्षिप्ता, क्रिया बहुला चास्ति। भारतीयसंस्कृतियज्ञव्यवस्था उपनिषत्वाङ्मयेऽतीव गौरवास्पदम्। उपनिषत्साहित्यम् ज्ञानप्रकाशकं, शान्तिप्रदं, मानवसंस्कृतेरादिजननी चेति बहुभिः पाश्चात्यविद्वद्भिरुद्घोषितम्। दिल्लीपतेः शाहजहानस्यात्मजः दारा शिकोहानामा यवनोऽपि सन् उपनिषत्साहित्ये मुग्ध आसीत्। कतिचनोपनिषदामनुवादोऽपि पारसीकभाषायां सम्पादितः। इदं पारसीकभाषान्तरस्य फ्रेंचानुवादमवलोक्य शार्मण्यदेशीयेन विदुषा शोपनहारेणोल्लिखितं यदुपनिषद्विद्यया जीवनकाले यथा शान्तिः प्रदत्ता मह्यं तथैव मरणोत्तरकालेऽपि शान्तिं प्रदास्यतीति मदीयो विश्वासः। यदुपज्ञयं उपनिषद्विद्या तेषां मनुष्यपदेनाभिधानं न युक्तम्। विश्वतत्त्वज्ञानस्य आदिमं स्त्रोतः उपनिषन्महासरित एव प्रवाहितं प्रतीयते। सत्यमेवैतत्।

**उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत।**
**क्षुरस्य धारा निशिता दुरत्यया दुर्ग पथस्तत्कवयो वदन्ति।।**

उपनिषदां सदातन-सत्येन प्रेरणाप्रदं वचनामृतम्। सातिशयलोकतिकरञ्चेति।

अन्ते च औपनिषदवचोभिरेवोपसंहारः-

ऊँ आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणं मेडस्त्व निराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु।। ऊँ शान्तिः शान्तिः शान्तिः।।

सन्दर्भ सूची -


1. मुण्डकोपनिषत्-5
2. ऋग्वेद- 1/50/10
3. ऋग्वेद- 1/164/20
4. ईशावास्योपनिषद् 1
5. शतपथब्राह्मण 11/5/6/3
6. शतपथब्राह्मण 1/1/14
7. ऋग्वेद 10/90/6
8. यजुर्वेद 9/21
9. शुक्लयजुर्वेद 23/11
10. अथर्ववेद 18/4/2
11. श्रीमद्भगवद्गीता 10/25
12. श्रीमद्भगवद्गीता 5/29
13. कठोपनिषद् 1/3/14
14. केनोपनिषद्



अनुसंधाता
राष्ट्रियसंस्कृतसंस्थानम् (मा0वि0वि0)
लखनऊपरिसरः लखनऊ


गोमती

# रस सूत्रविमर्शः

- सचिन सेमवालः (शोधच्छात्रः)

**वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे।**
**यन्नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम्॥**

लोकोऽयं क्षणभङ्गुरो दुःखालय अशाश्वतो मृत्युलोकश्चेति विश्रुतमेव। परञ्चायं लोकः चतुरशीतिलक्षयोनीनां दुर्जालात् विमोचको मोक्षसाधनोऽपि। विशेषेणात्र भारताजिरे देवा अपि जनितुं प्रयतन्ते। तथाहि लोकेऽस्मिन् जन्म दुर्लभमेव। तत्रापि चतुरशीतिलक्षयोनिषु श्रेष्ठतमा मानवयोनिः। यतोहि भवार्णवात्तारयितुं तत्र मानवत्वं द्वारमिव विहितम्। मानवत्वलाभेऽपि शास्त्रविद्या दुर्लभा। नैव सर्वे मानवाः विद्यार्जनरूपं सौभाग्यं लभन्ते। जन्मजन्मान्तरस्य सुकृतातिशयफलोदयेनैव विद्याप्राप्तिः सम्भवा। विद्यालाभेऽपि काव्यकर्तृत्वं तस्मादपि सुदुर्लभम्। सर्वे विद्यावन्तः काव्यं प्रणेतुं नैव प्रभवन्ति। अहो! काव्यत्वलाभेऽपि शक्तिः सुदुष्प्राप्या। सर्वे कवयः कवित्वबीजरूपसंस्कारविशेषवन्तो नैव भवन्ति। तस्यैव काव्यत्वशक्तेः अधिष्ठातृतत्त्वं रसस्वरूपं समीक्षामहे।

लोकेऽस्मिन् सहृदयानां चित्तेपूर्वपरिव्याप्ता रतिहासादि स्थायिभावाः, अर्थात् नायकनायिकाभ्यां सम्बन्धितप्रीतिरादिचित्तवृत्तिः। यस्याश्रयेण भावाः प्रकट्यन्ते। काव्येषु नाटकेषु च नायकादिरूपालम्बनविभावै उद्यानादिरूपोद्दीपनविभावैः, भ्रूविक्षेपादिरूपानुभावैः लज्जादिरूपसञ्चारी भावैश्च अनवरतपरिव्याप्त चित्तवृत्तिः स्वानुकूलतां प्राप्य रसे परिणता भवति। सैव रसो विगलितवेद्यान्तरं परब्रह्मानन्दानुभूतिकारकं तत्त्वं कथ्यते। 'रस्यते आह्लाद्यतेति' रसः। साधारण्येन रसशब्दस्याभिधार्थः रसनेन्द्रियग्राह्यो गुणो भवति। कोशग्रन्थानुसारं रसशब्दस्यार्थः 'सर्वस्वं' 'सारतत्त्वं' वा भवति। परञ्च काव्यजगति रस शब्देन काव्यश्रवणपठनमननकालीनानन्दानुभूतिरभिव्यज्यते। रसोत्पत्तेः निमित्तं तस्य भावानुभावादयो भवन्ति। तैः जनितरसपरिणतिः स्थायित्वेन सहृदयानां चित्तेऽवाप्य स्थायिभावविशेषत्वात् तिष्ठति। काव्यस्वरूप-प्रस्थापकाचार्यैः यत्र छन्दोऽलङ्कारगुणरीत्यादयः काव्यबाह्यावयवरूपेण स्वीक्रियते, तत्र रसतत्वं काव्यस्यात्मा इति मन्यते। विशेषतः साहित्याचार्येण श्रीविश्वनाथेन- 'वाक्यं रसात्मकं काव्यम्'[1] इति कथितम्।

आदौ रसतत्त्वविमर्शं वेदवाङ्मये दृष्टव्यम्। चतुर्षु वेदष्वेव प्रायेण रसशब्दस्य प्रयोगो दरीदृश्यते।[2] ऋग्वेदे रसनेन्द्रियग्राह्यरसतत्त्वस्य यथा सोमरसादिरूपवर्णनबाहुल्यं प्राप्यते।[3] ''ऋषिभि संभृत रसम्'' अस्मिन् मन्त्रांशे ऋषिभिः प्रणीतं सूक्तनिचयं वेदरसं सारं वा कथितम्।[4] यो वः शिवतमो रसः'' दशममण्डले अनेन मन्त्रेण यद् शिवतमं तत्त्वं परिलक्ष्यते, सैव काव्यरसानन्दमूलं प्रतिभाति। ऋग्वेदवदेव[5] यजुसामाथर्वण्येष्वपि [6] 'रस' पदेन काव्यरसार्थमभिव्यञ्जितम्। पुष्टप्रमाणरूपेण भरतमुनिना नाट्योत्पत्तिविषये नाट्यशास्त्रे ऋग्वेदात् पाठ्यं, सामवेदात् गानं, यजुर्वेदादभिनयं, अथर्वणाच्च साक्षाद्रसमेव स्वीकृत्य विधिना पञ्चमनाट्यवेदमरचतीति प्राप्यते। तद्यथा-

[8]जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च।
यजुर्वेदादभिनयान् रसानाथर्वणादपि॥

ब्राह्मणग्रन्थेष्वपि रसतत्त्वस्य प्रभावो विस्तृत:। तत्र शतपथब्राह्मणे रसस्यालौकिकत्वममृतोपमया विहितम्। ब्रह्मणा सुधारसपानाय छन्द:सु रसतत्त्वमुपन्यस्तम्। श्रवणेन्द्रियग्राह्य छन्द:रसेनैवाभीप्सितं सिद्ध भवति। तेनैव मखादिसिद्धिश्च जायते।[8] 'सरसैर्हास्य छन्दोभिरिष्टं भवति। सरसैश्छन्दोभिर्यज्ञं तनुते।' इत्यनेन ब्राह्मणग्रन्थेषु काव्यरसस्य प्रतिपादनं दृश्यते। उपनिषत्सु तैत्तरीयोपनिषदि[9] 'रसो वै स: रसं ध्येवायं लब्धवानानन्दी भवति।' वाक्यांशेऽस्मिन् परमात्मस्वरूपं रसरूपमिति बोधितम्। परमानन्दस्य मूलमिदम्। विषयेऽस्मिन् 'सुकृत' शब्दप्रयोगोऽत्र दृश्यते। तस्याशय: सम्यक् विनिर्मितं सुचारुतया प्रणयनञ्च। रसोऽपि परब्रह्मवदानन्दरूप:। सहृदयैरध्येतृभिर्यदा रसानुभूतिर्क्रियते, तदात्मानमपि परमानन्दस्वरूपानुभूयते। अत्र रसस्य ब्रह्मणा सहैकरूपसम्बन्धो विद्यते। निरुक्ते, पाणिनीयव्याकरणेऽपि रस इति पदस्य 'रसास्वादनं' स्नेहनमिति चुरादिगणे उल्लेखो प्राप्यते।[10] रसस्यते-आस्वाद्यतेति व्युत्पतौ निष्पन्नभाव: परमात्मरूपरससमग्रत्वं प्रतिपादयति।

आदिकाव्यरामायणस्याधारो रसतत्वमेव।[11] शोकत्वेनागतं श्लोकरूपं करुणरसजन्यकाव्य-बीजतत्त्वमासीत्। येन काव्यवटवृक्षं सुदिनं नितरामेव परिवर्द्धमानोऽस्ति। आदिकविना प्रथमकाव्यकारणं शोकजनितं करुणरसमेव स्वीचकार। प्रायशो नवसङ्ख्यकानां रसानामुद्धरणं रामायणे प्राप्यते। महाभारत पुराणाचार्यो महर्षि वेदव्यासोऽपि नास्त्येतस्माच्च्युत:। अग्निपुराणे तेनाप्युक्तम् '[12]वाग्वैदग्ध्य प्रधानेऽपि रसएवात्र जीवितम्'।

अनेन भरतमुनिकालात्प्रागपि रसतत्त्वस्य विपुलविग्रहं सम्मुखं नैवासीदिति सुस्पष्टमेव। केवलं साङ्केतिकरूपेण सर्वत्र परिव्याप्तपरब्रह्मवदेव साकाररूपेणानुपलब्धोऽस्ति। भरतेन स्वग्रन्थनाट्यशास्त्रे रसनिरूपणावसरे रसतत्त्वविमर्शं अभूतपूर्वरीत्या चकार। तद्यथा-

'[13]नहि रसादृते कश्चिदर्थ प्रवर्तते' इति। अस्यां कारिकायां मुनिना पारिभाषिकं नाट्यसारं कथितम्। पुन: तत्साररूपतत्त्वस्वरूपमभिलक्षयन् सूत्रमिदं प्रतिपादितम्-

[14]**"विभावानुभावव्यभिचारिभावसंयोगाद्रसनिष्पत्ति:"**

सूत्रमिदम् आदिकाव्यबीजवद्रससिद्धान्तस्यादिबीजम्। अनेन भावादीनां समुचितप्रादुर्भूते तेषां सम्मेलनेन स्थिरत्वेन च रसतत्त्वं प्रतीयते। विभावानुभावव्यभिचारीसंयुक्तवाचिकादभिरभिनयैरभि-व्यञ्जितस्थायिभावो रस: इत्युच्यते। तत्र भावाभावे रसस्थितिर्नैव भवितुं शक्यते। तथाहि रसानां भावानाञ्च सम्बन्धोऽविच्छिन्नमेव भवति। रसनिष्पादने भावा: संयोजनकारणम्, अतएव भरतमुनिकृत-सूत्रे सर्वेषां भावानां रूपैकत्वमलौकिकतत्त्वरसमुपजायते। प्रथितप्रतिष्ठकाव्यशास्त्रीयाचार्यैः सिद्धान्तोऽयं स्वीकृत:। तस्यारम्भ: परमाचार्य मम्मटेन वर्णितम्-

**[15]कारणान्यथ कार्याणि सहकारीणि यानि च।**

**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥**

**विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः।**

**व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः॥**

अनया कारिकयाभिज्ञायते यद्रत्यादेः स्थायिभावानामास्वादनयोग्यकारको विभावः। तान् विभावाननुभूतेर्सहायकानुभावाः। तथा सहृदयस्य चित्ते प्राप्ततत्त्वं सञ्चारणेऽभिव्यनक्ते कारकाः सञ्चारीभावश्च कथ्यन्ते। एतेषां समेषां व्यक्तचर्वणाविषयी-स्थायिभावाः अथवा सहृदयानां चित्तेऽविच्छिन्नतया परिव्याप्त-समूहालम्बनात्मकवृत्तिरेव रस इति।

एतदतिरिच्य काव्यप्रकाशे आचार्यमम्मटेन रसनिष्पत्तिविषयकचतुर्वादाः विवर्णिताः। भरतमुनिकृत-रससूत्रमादाय विविधशास्त्रमीमांसान्यायसांख्यालङ्कारवादिभिराचार्यैः विमर्शितम्। तत्र भट्टलोल्लटस्योत्पत्तिवादः, श्रीशङ्कुकस्यानुमितिः, भट्टनायकस्य भुक्तिवादः, अभिनवगुप्तस्याभिव्यक्तिवादश्च प्रथिताः। एते चत्वारो वादाः रससिद्धान्ते साक्षात् सम्बन्धितास्सन्ति। विशेषेण रससूत्रविमर्शत्वात् समासेनात्र प्रस्तूयते।

**1. भट्टलोल्लटस्योत्पत्तिवादः**:- मीमांसको भट्टलोल्लटः 'उत्पत्तिवादस्य' संस्थापकाचार्योस्ति। आचार्येण 'संयोगात्' इति पदस्य 'उत्पाद्योत्पादकभावसम्बन्धात्' तथा निष्पत्तेरर्थः 'उत्पत्तिः' इति क्रियते। तन्मतानुसारं नायकप्रधानत्वेनानुकार्यरामादौ रसः निष्पद्यते। नहि गौणत्वादनुकर्तृ सामाजिकेषु च। तत्र सामाजिकानां चित्ते रसविषयकचमत्कारो नैवुपजायतेति। नट-नर्तकीषु सीता-रामो विभावत्वेन रसोत्पादने प्रधानं भवति। विभावानां रत्यादेः स्थायिभावैः सह जन्य-जनक भाव (उत्पाद्योत्पादक) सम्बन्धो भवति। स्थायिभावो यावत् विभावानामाश्रयी नैव भवति, तावत्तस्योत्पत्तिर्नैव सम्भवा। अनुभावाः स्थायिभावानां प्रतीतिः कारयन्ते। यावत् कटाक्षभुजाक्षेपणादिक्रिया नैव भवति, तावत् भावप्रतीतिर्कथं भवेदिति। अतः अनुभावानां रत्यादेस्थायिभावानां सह गम्य-गमक (ज्ञाप्य-ज्ञापक) भावसम्बन्ध इति। तदनन्तरं सम्यमनुभूतं तत्त्वं निर्वेदशङ्काग्लानीत्यादयो व्यभिचारिभावाः परिपोषयन्ते। तैः सह पोष्यपोषकभाव सम्बन्धो विद्यते। परिपुष्टस्थायिभावेन सामाजिकानुकर्तृणामन्नः करणेणु साक्षात् सम्बन्धत्वेन वेशवाणी विन्यासाश्रयो रामदुष्यन्तादिष्वारोपणेन रसनिष्पत्तिः भवति। तद्यथा- '[16] **विभावैर्ललनोघानादिभिरालम्बनोद्दीपनकारणैः ....रामादावनुकार्ये तद्रूपतानुसंधानान्नर्त्तकेऽपि प्रतीयमानो रसः' इति भट्टलोल्लटप्रभृतयः**'। सिद्धान्तेऽस्मिनरुचिबाहुल्येनैवायमप्रसिद्धिमवाप। वस्तुतः एतैवारुचीणां निराकरणाय श्रीशङ्कुः न्यायशास्त्रा-विलम्बितरसनिष्पत्तिसिद्धिः क्रियते।

**2. श्रीशङ्कुकस्यानुमितिवादः** -न्यायशास्त्रावलम्बिनः आर्चाश्रीशङ्कुकः रससूत्रविमर्शे अनुमितिवादं स्थापयति। आचार्येण स्वसिद्धान्ते 'संयोगात्' पदस्यार्थो 'गम्यगमकभावसम्बन्धात्' तथा 'निष्पत्तिः' इति पदस्य चानुमितीति क्रियते। अस्य मतानुसारं नटः कवेर्काव्याभिप्रायं विज्ञाय रत्यादेर्भावानामास्वादनं क्रियते। तेन च कृत्रिमाभिनयेन सामाजिकानपि शिक्षाभ्यासबलाद् कारणकार्यसहकारि अर्थात् विभावानुभावव्यभिचारिभावानां ज्ञानं कारयते। वस्तुतो मिथ्यास्ते सत्यं प्रतिभान्ति। सामाजिको रसेन सह 'गम्य-गमकभाव सम्बन्धात्' (साध्य-साधक) वा व्याप्तिसम्बन्धात् कृत्रिमनटेऽपि रत्यादेर्भावानुमानं

कुरुते। अनुमाननीय रतिरूपवस्तुः सौन्दर्यबलात् निरतिशयेन विलक्षणोऽनुमीयते। तत्काले अविद्यमानाभावोऽपि नटस्यान्तःकरणेस्थायित्वेन सम्भाव्यमानाः सामाजिकानां धारावाहिकेच्छया पौनःपुन्येनानुसन्धितेन रसतत्त्वरूपे परिणतो भवति। तद्यथा- [17] 'इत्यादिकाव्यानुसन्धानबलाच्छिक्षाभ्यासनिर्वर्त्तितस्वकार्यप्रकटनेन च.......... सामाजिकानां वासनया चर्व्यमाणो रस इति श्रीशङ्कुकः।'

**3. भट्टनायकस्य भुक्तिवादः**- सांख्यशास्त्रावलम्बिनो भट्टनायको रससूत्रे 'संयोगात्' इति पदस्यार्थो 'भोज्यभोजकत्वभावसम्बन्धात्' तथा 'निष्पत्तिः' इत्यस्य 'भुक्तिः' स्वीक्रियते। आचार्यभट्टनायक-मतानुसारमनुकार्यरामादौ रसप्रतीतिः नोत्पद्यते नाभिव्यज्यते। यतोहि व्यापारे द्वावेव तटस्थौ स्तः। अभिधाव्यापारात् पदार्थस्योपस्थितिर्जायते। ततो भावकत्वव्यापारेण तस्य साधारणीकरणं भवति। साधारणीकरणं नाम 'रामादेः विशेषांशस्य परित्यागं कृत्वा कामी-कामिनीवत् स्वीकृत्य उपस्थापनं' च भवेत्। तदनन्तरम् अपरं भोजकत्वव्यापारेण रत्यादेः साक्षात्कारं सामाजिकाननुभाव्यते। चित्ते राजस्तामस् गुणयोर्गौणत्वेन सत्त्वगुणस्याभिवृद्धिः चमत्कृताभिर्भावरूपेण भवति। सत्त्वोद्रेकप्रकाशानन्दमयस्वरूपं ज्ञानमनुभावयनन्-व्यवसायत्वात् अन्यज्ञानादभिन्नरसविषयकभोजकत्वव्यापारेण रसानुभूतिः भोजयते। तद्यथा- [18] न ताटस्थ्येन नामगत्वेन रस प्रतीयते.....सत्त्वोद्रेकप्रकाशानन्दमयसेविद्विश्रान्तिसतत्वेन भोगेन भुज्यते इति भट्टनायकः।

**4. अभिव्यक्तिवादः**- वादस्यास्य संस्थापकाचार्यो वेदान्तमतानुयायिनो व्यञ्जनावादिनः अभिनवगुप्तविद्वद्वरः। आचार्येण 'संयोगात्' पदस्यार्थो 'व्यङ्ग्यव्यञ्जकभावसम्बन्धात्' तथा 'निष्पत्तिः' पदमभिव्यक्तिरूपेण व्याख्यायितम्। रत्यादिस्थायिभावानां कारणं विभावानुभावादीनामनुभावनेन पौनःपुन्येनानुमानित रतिः संस्कारत्वेन सहृदयसामाजिकानां चित्तं परिव्याप्य प्रभावयति। अनन्तरमभिनयनौपुण्येनाचरित् रामादेर्व्यक्तिविशेषसम्बन्धितांशं परित्याज्य वासना संस्कारेण सामाजिको विभावादिभिः सह साधारणीकरणं स्थापयति। ततो साधारण्येन ज्ञातविभावादिभिः सहृदयनां चिते स्थित रतिः व्यञ्जनया आस्वादिता भवति। तदा व्यक्तिविशेषाश्रितभावानां समाप्तेः अन्तर्हृदि चमकृतिजनक शृङ्गारादि रसानां प्रादुर्भवो भवति। लौकिकज्ञानापनयनवशात् लोकोत्तरमत्कृतिकारको रसास्वादनं सामाजिकेभ्यः क्रियते। विशेषतः अनेन मतानुसारेण रसास्वादनं ज्ञानस्वरूपात्माकृतिवत् भवति, परञ्च रसं ज्ञानादभिन्नमेव स्वीकृतम्। आत्मस्वरूपवत् रसस्याप्रत्यक्षीकरणं नास्ति। रसानुभूतिस्तु प्रत्यक्षम्। रसास्वादनमेव तस्य स्वरूपस्य ज्ञानं विदधाति। पानकरसन्यायेनास्वादने सहृदयानां हृदये प्रविशन् सर्वाङ्गीणालिङ्गयन् अन्यत् समस्तलौकिक-दृश्यपदार्थानां तिरोदधत् साक्षात् ब्रह्मानन्दानुभावयन् दिव्यचमत्कारजनको रसाभिव्यक्तिः क्रियते। अयमेव रसनिष्पत्तेः सिद्धान्तः।

उपर्युक्तवर्णितरससिद्धान्तेषु चतुर्थोऽभिनवविद्वद्वरपादस्याभिव्यक्तिवादः सर्वाधिकयुक्तियुक्तः सर्वसम्मतश्चास्ति। काव्यशास्त्रीयपरमाचार्य मम्मटः, श्रीविश्वनाथादि प्रभृतयान्य विद्वाशंश्चापि अनेन सह साम्यं विदधति। आचार्यमम्मट्टोऽपि रसनिष्पत्तिविषयकस्वमतं प्रस्तुते लिलेख। रत्यादिस्थायि-भावानामास्वादने कारणभूत विभवाः तेषां चानुभावये सहायकानुभावाः, तेषामपि हृदये पौनःपुन्येन संचरमाणाः अभिव्यज्यमाणाश्च भावानां व्यक्तचर्वणाविषयकरतिरेव विशेषचित्तवृत्तिः रसरूपे परिणता भवतीति। तत्र आचार्यविश्वनाथोऽपि साम्यभजमानो मतं प्रस्तूयते-

'विभावानुभावेन व्यक्तः सञ्चारिणा तथा।

रसतामेति रत्यादिः स्थायीभावः सचेतसाम्।।'[19]

अर्थात् विभावानुभावव्यभिचारिभावैरभिव्यक्ता व्यञ्जनावृत्या सहृदयानां हृदि वासनारूपेणावस्थित रत्यादिस्थायिभावाः रसरूपे परिणति क्रियन्ते। तत्क्रमे पण्डितराजजगन्नाथोऽपि रसस्वरूपं निरूपयन् स्वग्रन्थे लिखति - **''समुचितललितसन्निवेशचारुणा काव्येन समर्पितैः..... निजस्वरूपानन्देन सहगोचरीक्रियमाणः प्राग्विनिविष्टवासनारूपो रत्यादिरेव रसः।''**[20]

अत्र स्थायिभावादिसहकारिभिः जनितालौकिकव्यापारेणात्मनः स्वरूपेणानन्देनाभिन्नत्वात् रसोऽहम् इति प्रतीते गोचरीक्रियमाणोऽनुभूयमानः प्राग्जन्मान्तरेऽत्र जन्मनि च विनिविष्टान्तर्भूतवासना रत्यादि संस्कारविशेषरूपा रत्यादिस्थायिभावाः एवः 'रसः' इति विवर्ण्यते।

उपर्युक्त विवेचनेन ज्ञायते यत् सर्वतत्त्वसंयोगेनाभिव्यक्तस्थायिभावो रसतत्वरूपतां विभर्त्ति। भरतमुनिकृतं रसनिष्पत्तिप्रतिपादकसूत्रमिदं नूनमेव काव्यशास्त्रे प्रचलित सर्वेषु सिद्धान्तेषु शरोवर्ति-पदमावहयति। विश्वतोमुखं सारवदाधुनिकयुगेऽपि काव्यशास्त्रीयाचार्याणां समीक्षणभाजकमिदम्।

1. साहित्यदर्पण प्रथमपरिच्छेद
2. 'जन्मे रस्य वानृघे'- ऋग्वेद- 1/37/5
3. तदेव, 9/67/3
4. ऋग्वेद-10-9-2
5. 'नमो वः पितरो रसाय'- यजुर्वेद-2-32
6. या रसस्य हरणाय- अथर्व. 1-28-3
7. नाट्यशास्त्रम् 1-17
8. शतपथ ब्राह्मण-1/2-41-3
9. तैत्तरीयोपनिषद्- 4/2-4-8
10. 'एरच' 3/3/56 सूत्रणे 'अच'
11. मा निषाद प्रतिष्ठां त्वमगमः शाश्वती समः।
    यत्क्रौञ्च मिथुनादेकं अवधीकाममोहितम्।। वा.रा. 1/2/15
12. अग्निपुराणोक्त काव्यलङ्कारशास्त्रम्-1-33
13. नाट्यशास्त्रं भाग 6-पृ. 83
14. तत्रैव
15. काव्यप्रकाश 4-27/28
16. काव्यप्रकाश चतुर्थ उल्लासः
17. काव्यप्रकाश चतुर्थ उल्लासः
18. काव्यप्रकाश चतुर्थ उल्लासः
19. साहित्यदर्पणः 3/1
20. रसगङ्गाधर प्रथमाननम्।

- (साहित्य विभाग)

रा.स.सं. लखनऊ परिसर, उ.प्र.

मो. 7500789229,

sachinsemwal52@gmail.com

# संस्कृतभाषाशिक्षणस्य नवीनाः विधयः

– प्रदीपचन्द्रढौढियालः

मानसमुद्भूत जगत्यस्मिन् मानवस्य भावाभिव्यक्तेः मख्यं साधनं भाषेति सर्वङ्गगीक्रियते। मानवसभ्यता संस्कृत्योश्च विकासे भाषायाः विशिष्टमेव स्थानं भजते। भाषासु सस्कृतभाषाऽध्यात्मज्योतिः प्रदा आचारशास्त्रशिक्षिका जीवनाह्लादकारिणी, सत्पथप्रदर्शिका ज्ञानाग्निना मोहान्धात्मोविनाशिकाऽस्ति। एतादृश्याः संस्कृतशिक्षायाः उद्देश्यानि कालदेशपरिस्थितिवशात् परिवर्तमानानि सन्ति। तदनुसारेण शिक्षाव्यवस्थायामपि विधीनां परिवर्तनं भवति। यस्य प्रभावः वयं वैदिककालिकशिक्षात् आधुनिक शिक्षापर्यन्तं जायमानानां परिवर्तनानां रूपेण पश्यामः। अद्य कक्षाधारितशिक्षायाः वातावरणं शनैः-शनैः जालाधारितेन (web Baded) सान्द्रमुद्रिकाधारितेन (C.D. Baded) स्वचालितगतया च अधि गमस्य प्रक्रियायां परिवर्तितम्।

परिवर्तमानासु परिस्थितिषु संस्कृतभाषाशिक्षणं रोचकं कथं स्यात्? इति सन्दर्भ नवीनविधीनां चिन्तनस्य आवश्यकता अस्ति। यथोक्तं पुराणमित्येव न साधुसर्वम्। अतः पुरातनेऽपि किञ्चिद ग्राह्यं नूतनेऽपि च तथैव किञ्चिद ग्राह्यम् उभयत्रापि किञ्चिद् श्रेयस्करं सुखावहं लोकोपकारि च।

अभिज्ञानशाकुन्तले महाकविकालिदासेनोक्तं-हंसो हि क्षीरमादत्ते तन्मिश्रावजयत्ययः। यथैव हंसो क्षीरम् आदत्ते तन्मिश्रा अपश्च जहाति तथैव यस्यां कस्यामपि पद्धतौ श्रेयस्करं यत्स्यात् तत्तदादेयम्। यच्च तत्राश्रेयस्करं तत्परिहेयम्। प्रौद्योगिकयुगेस्मिन् कथञ्च अभिभावकानां, छात्राणां मनस्सु संस्कृतभाषां प्रति सकारात्मिका अभिवृत्तिः उत्पादनीया इदमपि विचारणीयम्। प्राचीनकाले संस्कृताध्ययनस्य मूलविषयः श्रुतेरभ्यासः एवासीत् श्रुतिः कथं संरक्षणीया? प्रयासेऽस्मिन् उपाचार्यैः शिष्यैश्च मन्त्राणां शुद्धोच्चारणपूर्वक कण्ठस्थीकरणं क्रियते स्म। तात्कालिकशिक्षायाः सम्पूर्णस्वरूपं सामाजिकचिन्तने आधारितमासीत् तस्मिन् समये कर्गदस्य मुद्रणस्य च आविष्काराभाववशात् कण्ठस्थीकरणे बलमासीत् शिक्षणं मौखिक विधिनां प्रचलति स्म।

संस्कृतशिक्षणे विभिन्नविधानां शिक्षणं विविध-विधिभिः प्रतिधाभिश्च क्रियते। प्राचीनकाले केन विधिना शिक्षणं दीयते स्म आधुनिकाले शिक्षणमिदं कथं प्रचाल्येत प्रचलति? एतेषां प्रश्नानां समाधानाय संस्कृतशिक्षणस्य विधयः निम्नप्रकारेण विभक्तुं शक्यते–

**संस्कृतशिक्षणस्य विधयः**

**प्राचीनविधियः**

पाठशालाविधिः

**नवीनविधयः**

पाठ्यपुस्तकम्

**नवीनतमविधयः**

सूक्ष्मशिक्षणम्

गोमती

आगमनोपागमः

मौखिकविधिः

प्रत्यक्षः

समस्यासमाधानोपागमः

पारायणविधिः

विश्लेषणात्मकम्

प्रायोजनकार्यम्

वादविवादः

व्याख्या

दलशिक्षणम्

प्रश्नोत्तरम्

व्याकरणम्

पर्यवक्षेणाध्यनोपागमः

सूत्रम्

हरवार्टपञ्चपदी

संगणकाधारितम्

कथाकथनम्

मूल्याङ्कनम्

शिक्षणप्रतिमानम्

कक्षानायकः

सम्प्रेषणोपागमः

व्याख्या

निदानात्मकपरीक्षणम्

व्याजः

अभिनयविधिः

व्याकरणम्

क्रीड़ापद्धतिः

दण्डान्वयः

खण्डान्वयः

**पारम्परिकविधिः**

संस्कृतशिक्षणे अन्वयस्य विशिष्टं स्थानं वर्तते 'अन्वयः' इति पदे अनु अयश्चेति पदद्वयस्य सम्मेलनं वर्तते। गद्यक्रमम अनु अयति इत्यर्थः। अन्वयेन श्लोकार्थावबोधने सौकर्यः भवति। अन्वयप्रबोधे ग्रन्थे अन्वस्य भेदद्वयं वर्तते।

**दण्डवत् खण्डवच्चैव द्विभेदोऽन्वय उच्यते॥**

**दण्डान्वयः** **आद्ये विशेषणं योज्यं विशेष्यं तदनन्तरम्।**
**वाणमुल्लयप्रभृत्येवं पूर्व दण्डान्वयो भवेत्॥**

शिक्षणकाले इममेव क्रममनुसृत्य छन्दोबद्धश्लोकानां गद्यरूपे अन्वयः क्रियते। यथा–

**काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्।**
**व्यसनेन च मूर्खाणां निद्रया कलहेन वा॥**

शिक्षणे श्लोकस्य अस्य पदानि आदौ संश्लेषणात्मकक्रमे स्थप्यन्ते। तद्यथा– धीमतां कालः काव्यशास्त्रविनोदेन मूर्खाणां च (कालः) व्यसनेन निद्रया कलहेन गच्छति इति।

**खण्डान्वयः**–अन्वयस्य द्वितीय भेदः खण्डान्वयः। अस्मिन् प्रधानक्रियाया अन्वेषणं सर्वप्रथम क्रियते, तस्याः क्रियायाश्च सम्बन्धः कर्ता स्थाप्यते। अन्वेषणकार्य प्रश्नेन भवति। इमे प्रश्नास्तु श्लोकानां कथावस्तुना सम्बद्धाः भवन्ति एतेन छात्रेषु भावबोधनं रसास्वादनञ्च भवति।

कर्तृकर्मक्रियास्तावच्छ्लोके योज्यास्ततः परम्।
किमो रूपं पुरस्कृत्य तृतीयादि नियोजयेत्॥
ल्यवन्तञ्च तुमन्तञ्च क्त्वान्तं कर्मभूषितम्।
खण्डान्वये पुनः प्रश्नं पूर्वमन्ते प्रयोजयेत्॥

**पाठ्यपुस्तकविधिः**- भारते पाठ्यपुस्तकविधेः समर्थकाः डॉ0 वेस्टमहोदयः आसन्। अस्मिन् विधौ कक्षास्तरानुसारं विषयवस्तु वर्गीक्रियते। वर्गीकरणमिदं छात्राणां वातावरणे आधारितं भवति। संस्कृतशिक्षणाय निर्मितेषु पाठ्यपुस्तकेषु वर्णमालायाः आरभ्य पदानि वाक्यानि अनुच्छेदाश्च भवन्ति। एतेषां पुस्तकानां मुख्योदेश्यमस्ति यत् छात्राः स्वयमेव अध्ययनं कृत्वा सारल्येन संस्कृतस्य ज्ञानं प्राप्तुं शक्नुवन्ति। पाठ्यपुस्तकस्य पाठाः एव सम्पूर्णाध्ययनस्य केन्द्रविन्दवः भवन्ति मातृभाषया नवीनशब्दानामर्थः स्पष्टीक्रियते। आदर्शवाचनम् अनुवाचनम् पाठप्रवर्धनमङ्गीकृत्य मौनपाठनं कार्यते। इत्थं कठिनशब्दानामर्थः विशेषाशानां विवरणं मूल्याङ्कनप्रश्नाः व्याकरणस्यानुवादस्य चाभ्यासाः अध्यापकानां कृते सूचनाश्च अन्तर्भवन्ति।

**प्रत्यक्षविधिः**-विधिरयं सुगमपद्धतिः निर्वाधविधिः मातृविधिश्चेति नाम्नाऽपि ज्ञायते। सर्वप्रथमास्य प्रयोगः आंग्लभाषायाः कृते अभवत्। प्रत्यक्षविधेः तात्पर्यमस्ति यत् या भाषा अध्यापनीया सा स्वमाध्यमेनैव बोधनीया। यथा संस्कृतं संस्कृतमाध्यमेन। संस्कृतशिक्षणं आच विधेः प्रयोगः सर्वप्रथमं प्रो0 बी0 पी0 बोकीलमहोदयेन कृतः। तेन स्वीकृतं यत् भाषाशिक्षणे अयं विधिः अत्युपयोगी अस्ति। अनेन विधिना शिक्षणसमये कक्षायाः परिवेशः संस्कृतमयः स्यात्। अध्यापकैः छात्रैरपि कक्षायां संस्कृतभाषा व्यवहृता स्यात्।

**विश्लेषणात्मकविधिः**- अयं विधिः पूर्णादशं प्रति इत्यस्य सूत्रस्यानुसारं करोति। अनेन विधिना शिक्षण समये सम्पूर्ण पाठस्य सारः छात्राणां प्रस्तूयते ततः परं पाठस्य विभिन्नाशानां शिक्षणे क्रियते। संस्कृतशिक्षणे विशेषतः व्याकरणकथापाठयोः कृते विधिः अति उपयोगी अस्ति। अस्मिन् पृथक्-पृथक् रूपेण उदाहरणानि छात्राणां समक्षं प्रस्तूयन्ते यथा-विभिन्नानां पदानां सन्धिविच्छेद समासविग्रहं कारयित्वा तेषां संश्लेषणं प्रक्रियाम् अनुसरेत्। शब्दानां व्युत्पत्तिः कथं अभवत्? ईदृशः प्रश्नैः मूलधातु प्रत्यय उपसर्गादीन्। पृथक्-पृथक् कारयित्वा तेषामगि संश्लेषणं कारयेत्।

**हरबार्टी पञ्चपदी**- सुप्रसिद्धशिक्षाशास्त्रिमनोवैज्ञानिकहरवार्टमहोदयस्य सिद्धान्तानामाधारेण तेषां शिष्यैः अयं शास्त्रीयशिक्षणविधिः प्रस्तुतः। अन्यविषयवत् संस्कृतशिक्षणेऽपि अस्य प्रयोगः शिक्षाशास्त्रिभिः कृतः। अस्मिन् विधौ पञ्चसोपानानि भवन्ति। तेषां नामानि-

1-प्रस्तावना (उन्मुखीकरणम्)

2-विषयोपस्थापनम् (प्रदर्शनम्)

3-तुलना (अमूर्तिकरणम्)

4-सामान्यीकरणम्

5-प्रयोगः

**निरीक्षणविधिः**- निरीक्षणं नाम अवलोकनम्। इन्द्रियेभ्यः क्रियमाणं परीक्षणमेव निरीक्षणम्। निरीक्षणविधेः प्रयोगो मनोविज्ञानसमाशास्त्र इत्यादिषु प्रचलितो वर्तते। विभिन्न प्राचीनकालादेव भारते प्रचलितो वर्तते। प्राचीनसंस्कृतरूपकेषु परिता अवलोक्य सम्यक् निरीक्ष्य इत्यादयः अनेकेषां पदानां समूहाः उल्लिखिताः वर्तन्त। संस्कृतसाहित्यशिक्षण-विधेरस्य महान् उपयोगी वर्तते। संस्कृते एतादृशा अनेक प्रसङ्गाः सन्ति, येषां निरीक्षणं सम्भवति यथा-नदीवर्णनं आरण्यवर्णनं हिमालयादिपर्वतानाञ्च वर्णनम् इत्यादयः। एतेषां वर्णनकाले छात्रास्तत अवलोकनार्थ आनेयाः। विधिरयं छात्राणां जीवने न सह सम्बद्धो वर्तते। निरीक्षणेन छात्राः सक्रियां भूत्वा निरीक्षितं प्रति अधिगतविषयेः सह तुलनादिकं विधाय शिक्षणेन छात्राः सक्रियाः जायन्तेख अध्ययनेन च प्रवृत्ताः भवन्ति। विधिरयं छात्रान् संस्कृतसाहित्यविधाभिः परिचितान् कारयति अनेन छात्राणां आत्मविश्वासस्य विकासो भवति।

**आगमनोपागमः**- हिल्दाताबामहोदयस्य शिक्षणप्रतिमानम्। अस्य प्रवर्तकः हिल्दाताबा महोदयः। अपि च अस्य प्रयोगः सामाजिकविज्ञानविषये भवति, एवञ्च संस्कृतव्याकरणशिक्षणे अस्योपयोगः कर्तुं शक्यते। अस्मिन् विशेषतः तथ्यानां सूचनानाञ्च संग्रहः क्रियते।

**संग्रन्थनोपागमः**-आधुनिकवैज्ञानिकयुगे भाषाशिक्षणे वर्णाना शब्दानाञ्च स्थाने शिक्षाशास्त्रिभिः वाक्यानां कृते अधिकं महत्त्वं प्रदीयते। आंग्लभाषायां अस्य कृते Strucdural approch शब्दोऽयं प्रयुज्यते। भाषाशिक्षणस्य कृते सर्वाधिकोपयुक्तविधिः प्रत्यक्षविधिः इति भाषाविज्ञैः स्वीक्रियते। विद्यालयेषु आंग्लभाषायाः अध्ययनमध्यायनम् अनेन विधिना साफल्येन क्रियते। संस्कृतशिक्षणाय अयं विधिः उपयोगी अस्ति। सर्वेषा स्तराणां कृते संस्कृतशिक्षणं रुचिकरं सुग्राह्यं च विधातुं क्रमबद्धरूपेण व्याकरणनियमानां ज्ञानप्रदानाय संग्रन्थनोपागमः सर्वाधिक उपयुक्तो वर्तते इति।

## सन्दर्भसूची


1- संस्कृतशिक्षण, डॉ0 सन्तोष मित्तल, आर लाल बुक डिपो मेरठ 2014

2- संस्कृतशिक्षण, प्रो0 सन्तोष मित्तल, नवचेतना पब्लिकेशन्स जयपुरम्

3- शिक्षणास्यायोजनप्रविधिः, डॉ0 सोहनलालपाण्डेय, अक्षर प्रकाशनम् जयपुरम् 2004

4- साहित्यशिक्षणविधिः, प्रो0 लोकमान्यमिश्रः, मृगाक्षीप्रकाशनम् लखनऊ 2013

5- शिक्षा में विचार एवं विधियाँ, डॉ0 सीताराम जायसवाल, प्रकाशन केन्द्र लखनऊ डालीगंज रेलवे क्रासिंग 2013

6- सूक्ष्मशिक्षण, अनिल कुमार शर्मा, देआबा बुक हाउस दिल्ली



-(धर्मशिक्षकः) शिक्षाशास्त्रविभागः

रा.सं.सं., लखनऊपरिसर, लखनऊ

# ज्योतिषशास्त्रे सन्तानसुखविचारः

- डॉ. शैलेशकुमारतिवारी

**"अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात्।**
**आनन्दग्रन्थिरेकोऽयमपत्यमिति पठ्यते''॥[1]**

अनेन वचनानुसारेण सन्ततिः दम्पत्योः हृदयरूपतत्त्वस्य अनुपमेया आनन्दग्रन्थिर्भवति। आनन्दग्रन्थिः नाम सुखराशिः, येषां दृष्ट्वा मनसि अनुरागत्त्वात् वात्सल्यरसस्याविर्भावो भूयात्। येषां मानवानां जीवने सुखस्यास्य सिद्धिः स्यात् ते नूनमेव सौभाग्यशालिनः सन्ति तथा च ये जनाः सन्ततिविहीनाः ते नैराश्यतापूर्वक अवसादग्रस्तयुक्तं स्वकीयं जीवनं यापयन्ति। सन्तानसूखस्याभावे नैकानि कारणानि भवितुमर्हन्ति।परन्त्वत्र ज्योतिषशास्त्रधिया सम्बन्धेऽस्मिन् शास्त्रसम्मतविचारः प्रस्तूयते।

भवन्तः सर्वे जानन्त्येव भारतीय-सनातनपरम्परायां चतुराश्रमाः (ब्रह्मचर्यगृहस्थ- वानप्रस्थ-संन्यासाश्रमाः) परिकल्पिताः। तत्र ब्रह्मचर्याश्रमानन्तरं समेषामाश्रमाणामाधारस्तम्भरूपेण गृहस्थाश्रमः स्वीकृतः ।आश्रमेऽस्मिन् विवाहः प्रथमः कर्तव्यः, तथा च विवाहस्य कल्पनाधारः सन्ततिप्राप्तिरेव न तूपभोगाय। विवाहे कन्यादानसङ्कल्पेऽपि वंशवृद्ध्यर्थमितिपदमुच्चरितं भवति।स्मृतिग्रन्थेष्वपि सर्वत्रैव सत्सन्तानोत्पत्तिद्वारा वंशवृद्धिरेव विवाहस्य परमोद्देश्यं वर्तते। यतो हि विवाहमुहूर्तनिरूपाणावसरे मुहूर्तचिन्तामणिग्रन्थकारेण आचार्यो रामदैवज्ञेन कथ्यते यत्-

**"भार्या त्रिवर्गकरणं शुभशीलयुक्ता**
**शीलं शुभं भवतु लग्नवशेन तस्याः।**
**तस्माद् विवाहसमयः परिचिन्त्यते**
**हि तन्निघ्नतामुपगताः सुतशीलधर्माः॥''[2]**

मानवजीवने कस्मात कारणादपि सन्ततिप्राप्ति व भवति तदा जीवन कालिया नैराश्यता-अवसादग्रस्ततादिविविधविकाराः प्रादुर्भवन्ति,येन दाम्पत्यजीवन भारस्वरूपम् आनन्दविहीनञ्च प्रतिभाति। सन्तानोत्पत्तौ अनेकाः बाधाः भवितुं शक्नुवन्ति यथा- गर्भविकारः, जन्मान्तरीयशापः, गर्भाधानार्थ परस्परं रज-वीयजानतशक्तिविकारः ,वातावरणीयदोषादयश्च। परन्तु ज्योतिषशास्त्रचक्षुषा दम्पत्योः जन्मपत्रयोः विविधभावस्थानां ग्रहाणां स्थित्यवस्थानुसारं संतानाभावार्थ प्रमुखकारणानामन्वेषणं बाधानां निवारणोपायाश्च ज्ञातुं शक्यते। यथोच्यते आचार्यकल्याणवर्मणा-

**विधात्रा लिखिता यासौ ललाटेऽक्षरमालिका।**

दैवज्ञस्तां पठेव्यक्तं होरानिर्मलचक्षुषा।।[3]

अस्माकं ज्योतिषशास्त्रं प्रत्यक्षशास्त्रत्वेन परिगण्यते। उक्तञ्च-

**अप्रत्यक्षाणि शास्त्राणि विवादस्तेषु केवलम्।**

**प्रत्यक्षं ज्योतिष शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ।।[4]**

अपि च-

अन्यानि शास्त्राणि विनोदमानं न किञ्चिदेषां भुवि दृष्टमस्ति ।

चिकित्सितज्यौतिषमन्त्रवादाः पदे पदे प्रत्ययमावहन्ति।।[5]

तथा च-

**यथा शिखा मयूराणां नागानां मणयो यथा।**

**तवद्वेदाङ्गशास्त्राणां ज्यौतिषं मूर्धनि स्थितम्।।[6]**

तत्रादौ सन्तानविचारो विधीयते-

जन्मकुण्डल्यां द्वादशभावाः भवन्ति। तेभ्यः द्वादशभावेभ्यः विविधविषयाः विचारणीयाः भवन्ति।

यथोक्तम्- **तनुकोशसहोदरबन्धुसुता रिपुकामविनाशशुभा विबुधैः ।**

**पितृभं तत आप्तिरपाय इमे क्रमतः कथिता मिहिरप्रमुखैः।।[7] (७)**

अपि च- **तनुधनसहजसुहृत्सुत।[8]**

तथा च-

**देहं द्रव्यपराक्रमौ सुखसुतौ शत्रुः कलत्रं मृति**

**र्भाग्यं राज्यपदं क्रमेण गदिता लाभव्ययौ लग्नतः।[9]**

तत्र होराशास्त्रस्य प्रायशः सर्वेष ग्रन्थेष जन्मकुण्डल्याः पञ्चमभावादव सन्तानविचारो निर्दिश्यते। तद्यथा बृहत्पाराशरहोराशास्त्रे-

**यन्त्र-मन्त्री तथा विद्द्यां बुद्धेश्चौव प्रबन्धकम् ।**

**पुत्रराज्यापभंशादीन् पश्येत् पुत्रालयाद् बुधः।।[10]**

अपि च जातकपारिजाते-

**पुत्राद्देवमहीपपुत्रपितृधीपुण्यानि सञ्चितयेदिति।[11]**

तथा च जातकाभरणग्रन्थे-

**बुद्धिप्रबन्धात्मजमन्त्रविद्द्याः विनेयगर्भस्थितिनीतिसंस्थाः।**

**सुताभिधाने भवने नराणां होरागमज्ञैः परिचिन्तनीयाः।।[12]**

एवञ्चोत्तरकालामृते-

**सन्तानं पितृपुण्यराजसचिवाः सौशील्य शिल्पे मनो**

**विद्ध्यागर्भविवेकछत्रसुकथामाङ्गल्यपात्राम्बरे।**[13]

अपि च सर्वार्थचिन्तामणौ-

**सुतभवनात् सुतबुद्धिमन्त्रिणामपिमन्त्रभोजनपित्रिभावान् ।**

**हृदयोदरप्रवेशं विवेकशक्तिञ्च निर्दिशेन्मतिमान्।।**[14]

सन्तानविचारः लग्न-चन्द्रमा-सप्तमेश-पञ्चमेश-बृहस्पतिभिश्च क्रियते। यथोच्यते-

**नाथैः कलत्रात्मजधर्मभानां पत्रादिचिन्तां कथयेत्सजीवैः।**[15]

तत्र स्त्रीजातकानाकृतेऽपि सन्तान ज्ञानाय जन्मकुण्डल्यां पञ्चमभावस्य विचारो भवति तथापि कुत्रचित् नवमभावस्यापि विचारः प्राप्यते।

प्रसङ्गेऽस्मिन् महर्षिपराशरः

**लग्ने देहफलं तस्याः पञ्चमे प्रसवस्तथा।**[16]

उक्तञ्च फलदीपिकायाम्-

**यद्द्यतप्रसवे क्षमं तदखिलं स्त्रीणां प्रिये वा वदे-**

**न्माङ्गल्यं निधनात् सूतांश्च नवमाल्लग्नात्तनोश्चारुताम्।।**[17]

**सन्तानविचारप्रसङ्गेऽस्मिन् ज्योतिषशास्त्रीयग्रन्थेषु प्रदत्ताः कतिपययोगाः- तत्रादौ सन्तानहीनयोगः-** कश्चिज्जातकस्य जन्माङ्गे देवगुरुबृहस्पतिः, जन्मलग्नम्, चन्द्रश्च पापग्रहैर्युक्तो दृष्टो वा स्युः एवञ्च पञ्चमस्थग्रहाः शुभग्रहैरदृष्टास्युस्तदा सन्तानाभावो जेयम्। उक्तञ्च -

**गुरुलग्नहिमांशूनां पापैः पञ्चमसंस्थितैः ।**

**शुभदृष्टिविहीनैश्च वक्तव्याः हीनबालकः ।।**[18]

पञ्चमस्थाने क्रूरग्रहस्स्यात,पञ्चमेशः पापकर्तरीभूत्वा शुभग्रहदृष्टिवर्जितस्स्यात्तदाप्यपत्यहीनता भवति। तद्यथा-

**पुत्रस्थाने गते पापे पुत्रेशे पापमध्यगे ।**

**शुभदृष्टिविहीने च वक्तव्यो हीनबालकः ।।**[19]

अपि च पञ्चमभावे बृहस्पतिः,नवमभवने क्रूरग्रहाश्चेत्तदा जातकः सन्तानरहितः स्यात्। एवञ्च पञ्चमेशः यदि त्रिकभवनेषु (६-८-१२ भावेषु) स्यात् अथवा पञ्चमनवम-लग्नेशाधिपतयः जन्मलग्नात् त्रिकस्थास्युस्तदा जातकाय पुत्राणामभावोऽवगन्तव्यम्। तद्यथा-

**वागीशात्पञ्चमेशस्त्रिकभवनगतः पुत्रधर्माङ्गनाथा**

रन्ध्र वेष्यान्तिमस्था यदि जनुषि नृणामात्मजानामभावः।।[20]

लग्नस्थाने क्षीणचन्द्रः,अस्तङ्गतो गुरुः मन्दराशिगतो (मकर-कुम्भस्थो) वा स्यात् एवञ्च सर्वे पापग्रहा:त्रिकोणस्थास्स्युस्तदा पुत्रसुखाभावो भवति। अपि च पापग्रहेण युतो बुधः पञ्चम-लग्न-चतुर्थभावेषु कस्मिंश्चित् भावे स्थितः,अथवा पञ्चमभावे शुभग्रहाणां स्थाने पापग्रहाः स्थिताः स्युस्तदा जातकाय सुतस्य मुखावलोकनं न सम्भवति। उक्तञ्च-

**क्षीणे शशाङ्के तनुभावयुक्ते मूढान्विते मन्दगृहे सुरेज्ये।।**

**त्रिकोणगैः पापखगैश्च सर्वैः प्रागेव पुत्रस्य सुखस्य नाशः।**

**चन्द्रात्मजे पञ्चमराशियुक्ते लग्ने सुखे वा यदि पापयुक्त।।**

**तथापना शुभेतरैः पञ्चमभावयुक्तैर्न दृश्यते पुत्रसुखं हि तेन।**[21]

**विलम्बितेन सन्तानप्राप्तियोगः**- लग्नेश-पञ्चमेश-नवमेशादायः शुभग्रहेण संयुक्तश्चेत्तदा विलम्बेन सन्ततिप्राप्तिर्भवति।उक्तञ्च जातकालङ्कारे-

**किञ्चित्कालं विलम्बः शुभखगसहितास्तेऽथ कर्के सुतः।**[22]

चतुर्थस्थाने पापग्रहो जीवो वा,चन्द्रः पञ्चऽमेष्टमे भावे वा स्यात्तर्हि त्रिंशद्वर्षाणां विलम्बेन सन्ततिर्भवति। एवञ्च पञ्चमभावे शभग्रहदृष्टिविवर्जिताः यावन्तो ग्रहास्स्यु तावन्मितवर्षप्रमाणं निश्चितमेव सन्तानप्राप्तौ विलम्बो भवति। तद्यथा-

**पापो वा वासवेज्यः सुखभवनगतः पञ्चमेवाऽष्टमे वा**

**शीतांशुः सन्ततेः स्यात्खगुणमितसमातुल्य एव प्रबन्धः।**

**यावन्तःपापखेटास्तनयगृहगताः सौम्यदृष्ट्या वियुक्ता-**

**स्तावद्वर्षप्रमाणो नियतमिहभवेत्सन्ततिर्वा विलम्बः।।**[23]

एवमेव लग्ने मन्दः, अष्टमे गरुः, व्ययभावे च भौमः स्यात्तदा चिरकाले सन्तानप्राप्तिर्भवति। उक्तञ्च- '**सर्वार्थचिन्तामणौलग्ने शनौ देवगुरौ तु रन्ध्र व्यये कूजे पुत्रजनिश्चिरेण।**[24]

**पुत्रप्राप्तियोगः**- पूत्रभावो पुत्रेशो गुरुर्वा शुभग्रहैर्दृष्टाः युक्ताश्चेत्तदा पुत्रप्राप्तिर्भवति।एवञ्च लग्नेशो यदि पञ्चमभावे स्यात् अनन्तरं पञ्चमेशो सबलः तथा च गुरुः पूर्णबलयुक्तः स्यात्तदा योगेऽस्मिन् पुत्रप्राप्तिधूवमेव भवति।प्रसङ्गेऽस्मिन् सर्वार्थचिन्तामणिकारः

**पुत्रस्थाने तदीशे वा गुरौ वा शुभवीक्षिते।**

**शुभेन सहिते वाऽपि पुत्रप्राप्तिर्न संशयः।।**

**लग्नेशे पुत्रभावस्थे पुत्रेशे बलसंयुते।**

**परिपूर्णबले जीवे पुत्रप्राप्तिर्न संशयः।।**[25]

एवमेव ज्योतिषशास्त्रे नैकाः योगाः प्रदत्ताः सन्ति। ततः स्त्रीणां प्रकृति समीक्ष्य सन्तानविचारः कर्तव्यः। सम्बन्धेस्मिन् दैवज्ञो वैद्यनाथः-

वन्ध्या वृद्धा कृशा बाला रोगिणी पुष्पवर्जिता।
कर्कशा स्थूलदेहा च नार्योऽष्टौ परिवर्जिता ॥[26]

अर्थादेतेषामष्टदोषरहितानां नारीणां सम्बन्धे अपत्यविचारः करणीयः। तथा च सदा स्मर्यते यत् सत्सन्तानप्राप्तिः धर्माचरणेनैव सम्भवति। अस्तु धर्मव्रतं पालनीयम्। येन जन्माङ्गे कोऽपि ग्रहः यदि सन्तानप्रतिबन्धकः स्यात्तस्योपशमनपूर्वकं सत्सन्तानप्राप्तिर्भविष्यति। उक्तञ्च-

तत्प्राप्तिधर्ममूला तदनु बुधकवी शङ्करस्याभिषेका-
चन्द्रश्चेत्तद्वदेव त्रिदिवपतिगुरुर्मन्त्रयन्त्रौषधीनाम्।
सिद्धया मन्दारसूर्या यदि शिखितमसी तत्र वंशेशपूजा
कार्योम्नायोक्तरीत्या बुधगुरुनवपाः क्षिप्रमेवात्रसिद्धिः॥[27]

अपि च- तथा ज्ञशुक्रजे दोषे पुत्राप्तिः शम्भुपूजनात्।
जीवचन्द्रकृते विप्र ! मन्त्रयन्त्रौषधादितः॥
राहुजे कन्यकादानात् सूर्यजे हरिकीर्तनात्।
गोदानात् केतुजे दोषे रुद्रजापात्कुजाऽऽकिंजे॥
सर्वदोषविनाशाय शुभसन्तानलब्धये।
हरिवंशकथा भक्त्या श्रोतव्या विधिना द्विज !॥[28]

**सन्दर्भग्रन्थाः**


१. उत्तररामचरितम्-३/१७
२. मुहूर्तचिन्तामणिः, पृ.सं.-८७
३. सारावली-२/१
४. बृहदैवज्ञरञ्जनम्,-२६
५. मुहूर्तचिन्ता. पीयूषधारा. पृ.सं.-९
६. वेदाङ्गज्योतिषम्-१/४
७. भावकुतूहलम्- १/४
८. लघुपाराशरी, पृ.सं.-४४
९. जातकालङ्कारः-१/५
१०. बृहत्पाराशरहोराशास्त्रम्-१२/६
११. जातकपारिजातः-१३/१
१२. जातकभारणम्-२/५५
१३. उत्तरकालामृतम्- ५/८
१४. सर्वार्थचिन्तामणिः-५/१
१५. तत्रैव- ५/२
१६. बृहत्पाराशरहोराशास्त्रम्-८२/३
१७. फलदीपिका-११/१
१८. दैवज्ञाभरणम्-१३/५७
१९. तत्रैव- १३/५८
२०. जातकालङ्कारः-२/१२
२१. सर्वार्थचिन्तामणिः-५/२८-२९/१/२
२२. जातकालङ्कारः- २/१३
२३. तत्रैव- २/१५
२४. सर्वार्थचिन्तामणिः-५/३१
२५. तत्रैव- ५/४-५
२६. जातकपारिजातः- १३/२३
२७. जातकालङ्कारः- २/१६
२८. बृहत्पाराशरहोरा.-८५/१०९-११



फलितज्योतिषाचार्यः , रा.सं.संस्थानम् लखनऊपरिसरः

गोमती

# मयमतानुसारं दिग्ज्ञानम्

– आनन्दप्रकाशपाठकः

भगवतो निःस्वासभूतस्य वेदस्य शिक्षादीनि षडङ्गानि[1] सर्वजनविदितानि एव सन्ति। षडङ्गेष्वपि वेदाङ्गेषु ज्योतिषं शास्त्रं महन्महनीय[2] सकलवेदाङ्गशास्त्रेषु मूर्धिन[3] संस्थितं शास्त्रं विद्यते इत्यत्र नास्ति काचित् विप्रतिपत्तिः। वेदपुरुषस्य षडङ्गेषु ज्योतिषशास्त्रं नेत्रस्थानीय[1,4] शास्त्रं विद्यते। एवंभूतस्य महन्महनीयस्य ज्योतिषशास्त्रस्य सिद्धान्त-संहिता-होरेति त्रयः प्रमुखाः स्कन्धाः[5] विलसन्ति। तथा च बार्हस्पत्ये[6] –

**स्कन्धं त्रयात्मकं शास्त्रमाद्यं सिद्धान्तसंज्ञितम् ।**
**द्वितीयं जातकं स्कन्धं तृतीयं संहिताह्वयम् ॥**

तत्र सिद्धान्तापर नाम्नः गणितस्य लक्षणमाह – भास्करः[7]

**त्रुट्यादिप्रलयान्तकालकलनमानप्रभेदः क्रमात्**
**चारश्च धुसदां द्विधा गणितं प्रश्नास्तथा सोत्तराः ॥**
**भूधिष्ण्यग्रहसंस्थितेश्च कथनं यन्त्रादि यत्रोच्यते**
**सिद्धान्तः स उदाहृतोऽत्र गणितस्कन्धप्रबन्धे बुधैः ॥**

अर्थात् सिद्धान्ते कालमाननिरूपणम्, अहर्गणानयनम्, वेधगणिताभ्यां ग्रहस्फुटीकरणम्, दिग्देशकालज्ञानोपायनिरूपणं तथा कतिपय तत्रकरण-व्यक्ताव्यक्त-चापज्याक्षेत्रगणितविषयाश्च विराजन्ते।

**अथ द्वितीयसंहिताभागस्य लक्षणमाह बृहत्संहिताकारः[8]–**

तत्र दिनकरादीनां ग्रहाणां चारास्तेषु च तेहां प्रकृतिविकृतिप्रमाणवर्णकिरण-द्युतिसंस्थानास्तमनोदयमार्गः मार्गान्तर=वक्रानुवक्रर्भग्रहसमागमाचारादिभिः फलानि नक्षत्रकृतविभागेन देशेष्वगस्त्यचारः सप्तर्षिचारः, ग्रहभक्तयो नक्षत्रव्यूहग्रहश्रृङ्गाटक-ग्रहयुद्ध-ग्रहसमागम-ग्रहवर्षफल-गर्भलक्षणरोहिणी-स्वात्याषाढीयोगाः सद्योवर्षकुसुमलतापरिधिपरिवेष-परिघपवनोल्कादिग्दाहक्षितिचलन-सन्ध्याराग-गन्धर्वनगर-रजोनिर्धातार्घ-काण्डसस्यजन्मेन्द्रध्वजेन्द्रचापवास्तु-विद्याङ्ग-विद्या वायस विद्यान्तर-वक्रमग- चक्राश्वचक्रवातवक्र-प्रसादलक्षण-प्रतिमालक्षण-प्रतिष्ठापनवृक्षायुर्वेदो-दगार्गलनीराजन-खञ्जनकोत्पातशान्ति मयूर-चित्रकधूत-कम्बल-खड्गपट्ट-कृकवाकुकूर्मगोजाश्वेभ-पुरुष-स्त्रीलक्षणान्यन्तः पुर-चिन्ता पिटकलक्षणो-पानच्छेदवस्तछेदचामरदण्डशयनाशनलक्षणरत्नपरीक्षा-दीपलक्षणदन्तककाष्ठाद्याश्रितानि शुभाशुभनिमित्तानि सामान्यानि जगतः प्रतिपुरुषं पार्थिवे च प्रतिक्षणमनन्यकर्माभियुक्तेन दैवज्ञेन चिन्तयितव्यानि। नारदपुराणेऽपि संहितास्कन्धस्य लक्षणम्[9] –

**संहिताशास्त्ररूपं च ग्रहचारोब्दलक्षणम् ।**
**तिथिवासर-नक्षत्र-योगतिथ्यर्धसंज्ञकाः ॥**
**मुहूर्तापग्रहाः सूर्य - संक्रान्तिगोचरः क्रमात् ।**

**चन्द्रताराबलं चौव सर्वलग्नातवाह्वयः ॥**
**आधान-पुंस-सीमन्त-जातनामान्तमुक्तयः।**
**चौलं कर्णच्छिदामौञ्जी क्षुरिकाबन्धनं तथा ॥**
**समावर्तनवैवाह प्रतिष्ठा-सद्मलक्षणम् ।**
**यात्राप्रवेशनं सद्यो वृष्टिः कर्मविलक्षणम्॥**
**उत्पत्तिलक्षणं चौव सर्वं संक्षेपतो ब्रूवे ॥**

इदानीं होरास्कन्धलक्षणमुपस्थाप्यते[10] । तद्यथा वराहः-

होराशास्त्रे च राशिहोराद्रेष्काणनवांशकद्वादशांशत्रिंशद्भाग-बलाबल-परिग्रहो ग्रहाणां दिक्स्थान-कालचेष्टाभिः अनेक प्रकारबलनिर्धारणं प्रकृति-धातु-द्रव्य-जाति-चेष्टादि-परिग्रहो- निषेकजन्मकाल-विस्मापन-प्रत्ययादेशसद्यो-मरणायुर्दायदशान्तर्दशाष्टक-राजयोग-चन्द्रयोग-द्विग्रहादियोगानां नाभसादीनां च योगानां फलान्याश्रय-भावावलोकन-निर्याणगत्यनकानि तत्कालप्रश्न-शुभाशुभनिमित्तानि विवाहादीनां च कर्मणां कारणम् । एवश्च नारदपुराणे[11]-

**जातके राशिभेदाश्च ग्रहयोनिर्वियोनिजे ।**
**निषेकजन्मारिष्टानि स्यायुर्दायो दशाक्रमः॥**
**कर्मजीवं चाष्टवर्गो राजयोगाश्च नाभसाः ।**
**चन्द्रयोगाः प्रव्रज्याख्याः राशिशीलं च दृक्फलम्॥**
**ग्रहभावफलं चौवाश्रययोगप्रकीर्णके।**
**अनिष्टयोगाः स्त्रीजन्मफलं निर्याणमेव च।**
**नष्टजन्मविधानञ्च तथा द्रेष्काणलक्षणम्।**

एवमत्र मुख्यरूपेण स्कन्धत्रयात्मकस्य ज्योतिषशास्त्रस्य लक्षणं प्रतिपादितम्। परमत्र केचन-सिद्धान्त-संहिता-होराप्रश्न-शकुन-प्रभेदैः स्कन्ध-पञ्चकं स्वीकुर्वन्ति। वस्तुतः सूक्ष्म-दृष्ट्यावलोक्यते चेदद्यतनमनोविज्ञान-जीवविज्ञान-पदार्थविज्ञान-रसायनविज्ञान-चिकित्साविज्ञानादीनि सर्वाण्यपि ज्योतिषशास्त्रेऽस्मिन्नन्तर्भूतानि भवन्ति।

एषु स्कन्धत्रयात्मके स्कन्धपञ्चात्मके वा ज्योतिषे वास्तुशास्त्रं संहितास्कन्धसम्बन्धितं शास्त्रं विद्यते। अस्य शास्त्रस्य पृथक्तया शास्त्रप्रवर्तकाः अष्टादश आचार्याः पुराणेष्वुपलभ्यन्ते। तद्यथा[12]-

**भृगुरत्रिवशिष्ठश्च विश्वकर्मायमस्तथा ।**
**नारदो नग्नजिश्चौव विशालाक्षः पुरन्दरः ॥**
**ब्रह्माकुमारो नन्दीशः शौनको गर्ग एव च ।**
**वासुदेवोऽनुरुद्धश्च तथा शुक्रो बृहस्पतिः ॥**
**अष्टादशैते विख्याता वास्तुशास्त्रोपदेशकाः ॥**

एतेषामाचार्याणामद्यत्वे ग्रन्थाः अनुपलब्धाः सन्ति। एतदतिरिक्ताः अपि महाराजभोजदेव-मयासुरप्रभृतयः केचन आचार्याः सन्ति येषां क्रमशः **समरांगणसूत्रधार-मयमतम्** प्रभृतयः कृतयः

सन्ति याः अद्यत्वे वास्तुशास्त्रविषये अस्माकं मार्गदर्शनं कुर्वन्ति। प्रकृतेऽस्मिन् प्रसंगे मयमतानुसारं सिद्धान्तज्योतिषोपयोगकरं वास्तुशास्त्रोपयोगकरं दिग्ज्ञानविषयं समुपस्थापयामि। ज्योतिषशास्त्रे विशेषण सिद्धान्तज्योतिषे, संहितायां, वास्तुशास्त्रे च दिग्ज्ञानस्य महनीयं महत्त्वं विद्यते। दिग्ज्ञानस्य महत्त्वमागम्य पारशा लिखितमस्ति- **दिङ्मूढे कुलनाशः** स्यादिति[13]। अपि च- कस्यां दिशि कस्य कार्यस्य कृते गृहं भवेत्? इत्यस्मिन् विषये सम्यक् उक्तमस्ति। तद्यथा[14]-

दिक्परत्वेन गृहविभागाः-

**पूर्वस्यां श्रीगृहं प्रोक्तमाग्नेयो स्यान्महानसम् ।**
**शयनं दक्षिणस्याञ्च नैऋत्यामायुश्धाश्रयम्॥**
**भोजन पश्चिमायाञ्च वायव्यां धनसञ्चयम् ।**
**उत्तरे दायसंस्थानमैशान्यां देवतागृहम्॥**
**इन्द्राग्न्योर्मथनं मध्ये यमाग्न्योर्घृतमन्दिरम् ।**
**यमराक्षसयोर्मध्ये पुरीषत्यागमन्दिरम् ॥**
**राक्षसजलयोमध्ये विद्याभ्यासस्य मन्दिरम् ।**
**तोयेशानिलयोर्मध्ये रोदनस्य च मन्दिरम् ॥**
**कामोपभोगशमन वायव्योत्तरयोर्गहम् ।**
**कौबेरेशानयोर्मध्ये चिकित्सामन्तिर सदा॥**
**पुरन्दरेशयोर्मध्ये सर्ववस्तुषु संग्रहम् ।**
**सदनं कारयेदेवं कमादुक्तानि षोडश॥**

दिग्जानार्थ सुस्पष्टरूपेण मगासुरेण सम्पकाया सरलः सिद्धान्तः समुपस्थापितः। सः वदति यत् उत्तरायणमासे शुक्लपक्षे अर्कोदये सति शाङ्कना दिग्ज्ञानं कर्त्तव्यम् । तद्यथा[15]-

**वक्ष्येऽहं दिक्परिच्छेदं शङ्कनाकोदये सति।**
**उत्तरायणमासे तु शुक्लपक्षे शभोदये ॥**

इदं दिग्ज्ञानं तदानोमेव सम्भवति यदा भाकाशः निर्मलः भवेत् । अपि च यत्र दिग्ज्ञानमभीष्टं स्यात् तत्र दण्डप्रमाणे चतुरते भने मध्यभागे भूमि समतलं कुर्यात् । तस्यां भूमौ मध्यभागे शडोः स्थापना कर्तव्या । तद्यथा[16] - **प्रशस्तपक्षनक्षत्रे विमले सूर्यमण्डले।**
**गृहीतवास्तुमध्ये तु समं कृत्वा भुवः स्थलम् ॥**
**जलेन दण्डमात्रेण समं तु चतुरसकम् ।**
**तन्मध्ये स्थापयेच्छडू तन्मानमधुनोच्यते ॥**

शङ्कोः मानविषये अस्मिन् मपमतं नामके गन्धे अरनि मात्रम् आयाम नाम लम्बायमानं लिखितमस्ति । यस्य शङ्कोः अग्रभागस्प मानम् एकाइलमितं भवेत् । शंकोः मध्यस्य व्यासमानं पञ्चालमितं भवेत् । अपिचायं शंकुः वर्तुलाकारः निव्रणः वगरहितः श्रेष्ठः भवति। मध्यमशंकुस्तु अष्टादशाङ्गलभितः प्रोक्तः। कन्यसः (लघुः ) शंकुः द्वादशाङ्गलायामसदृशः प्रोक्तः। तद्यथा[18]-

अरत्निमात्रमायाममगमेकाङ्गलं भवेत् ।
मूलं पञ्चाङ्गुलं व्यासं सुवृत्तं निव्रणं वरम् ॥
अष्टादशाङ्गलं मध्यं कन्यसं द्वादशाङ्गलम।
आयामसदृशं नाहं मूलेऽग्रे तु नवाङ्गलम् ॥

**शङ्कोः काष्ठव्यवस्थाः**– शोः काष्ठनिर्धारण व्यवस्था विषयेऽपि तत्र लिखिताऽस्ति। शङ्कोः काष्ठन्तु हस्तीदन्तस्य, चन्दनस्य, खादिरस्य, वद्रस्य, शमीक्षप, शाकवृक्षस्य तिन्दुकादिवृक्षस्य शुभदः प्रोक्तः। ज्योतिषजगति एते वृक्षाः शंकुवृक्षाः कथ्यन्ते। अन्तिमे कस्यचिदपि सारदुमल्य वृक्षस्य काष्ठमपि शंकुयंत्रस्य कृते प्रयोक्तुं शक्यते। इदं शङ्कयन्नं जलवत्समीकृतायां भूमौ अभीष्ट– करकाटकेन निर्मिते वृत्तमध्ये दिनादौ स्थाप्यते। वृत्तस्य परिमाणं शङ्कोः द्विगुणमानपरिमितं भवतीति निर्दिष्टमस्ति । पूर्वाह्ले तथा अपराह्लकाले तस्य शङ्कोश्छाया वृत्तान्तगा भवति। तद् बिन्दूदयगा रेखा पूर्वापरदिशां सूचयति। ततः पूर्वापरबिन्दुद्वयतः मत्स्योत्पादनेन अर्थात् मत्स्यचिह्ननिर्माणेन याम्योत्तरादिशे सिद्धयतः। मोनस्य मुख–पुच्छभागौ पूर्वापरदिशे तथा तस्य पंखदिशि यम्योत्तरदिशे भवतः। इत्थं पूर्वमध्ये आग्निकोणः, दक्षिण–पश्चिमयोर्मध्ये नैऋत्यकोणः, पश्चिम–उत्तरयोर्मध्ये वायव्यकोणः, इत्थम् उत्तर–पूर्वयोर्मध्ये ईशानकोणो भवति। तद्यथा–[19] **वै चन्दनं चैव खदिरः कदरः शमी।**

**शाकश्च तिन्दुकश्चौव शङ्कवृक्षा उदीरिताः॥**
**अन्यैः सारद्रुमैः प्रोक्तं तस्याग्रं चित्रवृत्तकम्।**
**शङ्कं कृत्वा दिनादौ तु स्थापयेदत्र भूतले ॥**
**शद्विगुणमानेन तन्मध्ये मण्डलं लिखेत् ।**
**पूर्वापराह्लयोश्छाया यदि तन्मण्डलान्तगा ॥**
**तद्विन्दद्वयगं सूत्रं पूर्वापरदिशीष्यते ।**
**बिन्दुद्वयान्तरभ्रान्तशफराननपुच्छगम् ॥**
**दक्षिणोत्तरगं सूत्रमेवं सूत्रद्वयं न्यसेत् ।**
**उदगाद्यपरान्तानि पर्यन्तानि विनिक्षिपेत् ॥**

एतावत् पर्यन्तं समेषामाचार्याणां मतं समानमस्ति । परमेतदने मयासुरेण कश्चिद् भिन्नः विचारः उपस्थापितः। सम्पूर्ण वर्षे शंकोश्छायाः सदैव पूर्वापरसूत्रे नैव पतति । यदा छाया पूर्वापरसूत्रे न पतति तदा किं कियते ये सा अपच्छाया शुद्धा छाया भवति। यदा पूर्वापरसूत्रे छाया न पतति तदा सा छाया अपछाया उच्यते। अपच्छायायाः विचारः अत्रोच्यते।

अपच्छायाकन्यायां[20] – **वृषभे राशावपच्छायात्र नास्ति हि**[21]॥

अर्थात् यदा सूर्यः कन्याराशौ वृषराशौ वा तिष्ठति तदा अपच्छाया (अशुद्धा छाया) नैव संजायते। अस्मिन् काले सूर्यच्छाया मध्याह्लात् पूर्व पश्चिमे भागे तथा मध्याह्लात् परं पूर्वे भागे एव पतति।

तत्र मेष–मिथुन–सिंह–तुलाराशिषु अन्यतरे राशौ यदा सूर्यः तिष्ठति तदा शंकोश्छायायाः निर्दिष्टे स्थाने अंगुलद्वयं विशोध्य चिह्न कर्तव्यम्। एवमेव यदा सूर्यः कर्क–वृश्चिक–एवं मीनराशिषु

अन्यतरे राशौ तिष्ठति तदा शंकोश्छायायाः निर्दिष्टस्थानात् अंगुलचतुष्टयं विशोध्य चिह्न कर्तव्यम् । धनु एवं कुम्भराशौ अवस्थिते सूर्ये षडङ्गुलं, मकरराशौ अवस्थिते सूर्ये अष्टाङ्गुलं विशोध्य चिह्न कर्तव्यम्। इत्थं पूर्वाह्न-अपराह्न-कालस्य चिह्नद्वयमपि क्रमेण वास्तविकपश्चिम-पूर्वविन्दू भवतः। तद्यथा[22]-

मेषे च मिथुने सिंहे तुलायां द्वयङ्गलं नयेत् ।
कुलीरे वृश्चिके मत्स्ये शोधयेच्चतुरङ्गलम् ॥
धनुः कुम्भे षडङ्गल्यं मकरेऽष्टाङ्गलं तथा ।
छायाया दक्षिणे बामे नीत्वा सूत्रं प्रचारयेत् ॥

इत्थं मयासुरेण मयमतं नामके ग्रन्थे दिग्ज्ञानस्य अन्याचार्याणां मतापेक्षया कश्चिद् भिन्नः प्रकारः प्रदर्शितः। प्रसङ्गादात्र दिग्ज्ञानप्रसङ्गे केषाञ्चन आचार्याणां मतानि उपस्थाप्यन्ते । तत्रादौ सूर्यसिद्धान्तस्य दिग्ज्ञानप्रकारः[23]-

शिलातालेम्बु संशुद्ध वज्रलेपेऽपि वा समे ।
तत्र शङ्क्वङ्गलैरिष्टैः समं मण्डलमालिखेत् ॥
तन्मध्ये स्थापयेत् शंकुं कल्पनाद्वादशाङ्गुलम् ।
तच्छायाग्रं स्पृशेद्यत्र वृतं पूर्वापराह्णयोः॥
तच्च बिन्दू विधातव्यौ वृते पूर्वापराभिधौ।
तन्मध्ये तिमिना रेखा कर्तव्या दक्षिणोत्तरा ॥
याम्योत्तरदिशोर्मध्ये तिमिना पूर्वपश्चिमा ।
दिङ्गमध्यमत्स्यैः संसाध्या विदिशस्तद्वदेव हि ॥

अपि च भास्कराचार्येण[24] -

वृत्तेऽम्भः सुसमीकृतक्षितिगते केन्द्रस्थशङ्कोः
क्रमाद्भाग्रं यत्र विशत्यपैति च यतस्तत्रापरैन्द्रयौ दिशौ।
तत्कालापमजीवयोस्तु विबराद्भाकर्णमित्याहताल्लम्ब-
ज्याप्तमिताङ्गलैरयनदिश्यैन्द्री म्फुटा चालिता ॥
तन्मत्स्यादथ याम्यसौम्यककुभौ सौम्ये ध्रुवे वा
भवेदेकस्मादपि भाग्रतो भुजमितां कोटीमितां शङ्कतः ।
न्यस्येद्यष्टिमृगाँ तथा भुवि यथा यष्ट्यग्रयो संयुतिः
कोटिः प्राच्यपरा भवेदिति कृते बाहुश्च याम्योत्तरा॥

इत्थं दिग्ज्ञानविषये मयासुरस्य मतमन्याचार्यमतानुसारं समुपस्थाप्य विरमामि विस्तरादिति दिक्।

**सन्दर्भ-ग्रन्थः-**


1. शिक्षा कल्पो व्याकरण निरुक्तं ज्योतिषां गतिः ।
   छन्दसां लक्षण चौव षडगो वेद उच्यते ॥ बृहज्जातकस्य १/१ इत्यस्य भटोत्पलटीकायां
2. वेदचक्षुः किलेदं स्मृतं ज्योतिषं मुख्यता चास्य मध्येऽस्य तेनोच्यते ।
   संयुतोऽपीतरैः कर्णनासादिभिश्चक्षुषाङ्गेन हीनो न किंचित्करः ॥ सि.शि.कालमानाध्याय श्लो.११

3. यथा शिखा मयूराणां नागानां मणयो यथा । तद्वद्वेदांगशास्त्राणां ज्योतिषं मूर्ध्नि संस्थितम् ॥
– वेदांगज्योतिषम् श्लो. सं. ५

4. शब्दशास्त्रं मुखं ज्योतिषं चक्षुष श्रोत्रमुक्तं निरुक्तं च कल्पः करौ ।
या तु शिक्षास्य वेदस्य सा नासिका पादपद्मद्वयं छन्द आद्यैर्बुधैः ॥ सि. शि. कालमानाध्याय श्लो.सं. १०

5. सिद्धान्त-संहिता-होरा रूपस्कन्धत्रयात्मकम् । वेदस्य निर्मलं चक्षुर्ज्योतिःशास्त्रमनुत्तमम् ॥ नारदसंहिता – १/४
अपि च- भगवत् परमं पुण्यं गुह्यं वेदाङ्गमुत्तमम् । त्रिस्कन्धं ज्योतिषं होरा गणितं संहितेति च ॥ मयमतम् –६/१
अपि च- ज्योतिषशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितं तत्कात्स्नेपनयस्य नाम मुनिभिः संकीर्त्यते संहिता ॥
स्कन्धेऽस्मिन गणितेन या ग्रहगतिस्तन्त्राभिधानत्वसौ होरान्योङ्गविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः ॥
बृ.सं. शास्त्रोपनयनाध्याय. श्लो.सं.–९

6. प्रकीर्णम्
7. सि.शि.कालमानाध्याय श्लो.०६
8. बृहतसंहितायां सांवत्सरसूत्रस्य श्लो.सं. ५ अनन्तरं संहिताप्रशंसाप्रसंगे
9. नारदपुराणे
10. बृहतसंहितायां सांवत्सरसूत्रस्य श्लो.सं. ४ अनन्तरम् ।
11. नारदपुराणे
12. मत्स्यपुराणे २२६ अध्याये
13. बृहदवास्तुमाला दिक्साधन प्रकरणं श्लो.सं. १
14. बृहदवास्तुमाला
15. मयमतम् –६/१
16. मयमतम् –६/१
17. अरनि नाम बदमुष्टिकरः
18. मयमतम् –६/४–५
19 तत्रैव ६/६–१०
20. अपच्छाया अर्थात् अशुद्धा छाया
21. तत्रैव ६/११
22. मयमतं –६/१२–१३
23. सूर्यसिद्धान्ते त्रिप्रश्नाधिकारे श्लो.सं. १–४
24. सिद्धान्तशिरोमणेः त्रिप्रश्नाधिकारे श्लो.सं. ८– ९

सिद्धान्तज्योतिषाचार्यः, लब्धस्वर्णपदकः
राष्ट्रियसंस्कृतसंस्थानस्य,
लखनऊपरिसरः, लखनऊ

# समाजशिक्षादृष्ट्या वाल्मीकिरामायणम्

– वरुण सौरभ पोखरियाल

निखिले विश्वसाहित्ये "आदिकाव्यं" नाम्ना प्रथितं ग्रन्थरत्नमिदं रामायणं संस्कृतसाहित्ये मौलिवच्छुशोभते। त्रेतायुगे रचितस्यास्य ग्रन्थपुष्पस्य सुरभिणा इदानीमपि सम्पूर्णं विश्वं सुगन्धीभवति, एतदेव अस्य ग्रन्थस्य रमणीयताया आकर्षकतायाश्च प्रमाणं वर्तते। करुणार्द्रचित्तस्य महर्षिवाल्मीके: मानससागरात् निःसृतायां रामायणज्ञानगंगायां मानवीयसभ्यताया: सर्वेषां पक्षाणाम् उदात्तचित्रणं वर्तते। रामायणस्य रसपरिपाकज्ञानगंगायाम् अवगाहयित्वा काचिदपि सभ्यता स्वकीयां आत्मिक- बौद्धिक- मानसिकमलिनतां दूरीकर्तुं शक्नोति। रामायणस्य प्राधान्यं वर्तते यदस्मिन् प्रतिगृहस्य दशाया: समावेशं वर्तते। पुत्र-पित्रो:, भ्रातृषु, प्रजा-राज्ञो:, स्वामी-सेवकयो: यद्धर्मबन्धनं, प्रीते: भक्तेश्च सबन्धो वर्तते, तेनैव रामायणस्य महनीयता, महाकाव्यत्वे सहजता च वर्तते। यदि हिमालयवदुन्नतानां व्यापकानाञ्च आदर्शानां, सागरवद् गम्भीराणां विचाराणां समावेश: कुत्राऽपि वर्तते, तत्तु रामायणे एव। एकस्मिन् पक्षे रामायणाद् साहित्यस्य कोऽपि साधारण-अध्येता रससिद्धकवे: रमणीयरचनायां रसमयं भूत्वा श्रद्धावान् भवति, अपरे पक्षे तु कोऽपि दार्शनिक: रामायणस्य प्रत्येकस्मिन् अक्षरे प्रतिभासित-आत्मन: अखण्डानन्देन स्वकीयं आलोकितमनुभवति।

आदिकाव्य-रामायणं मानवसभ्यताया: संस्कृतेश्च आदर्श दर्पणं वर्तते। सुव्यवस्थित-समाजस्य कृते रामायणस्यैव मौलिकं प्रयोजनं वर्तते, यद् रामादिवद्वर्तितव्यं न रावणादिवदिति।

**रामायणे समाजचिन्तनम्-**

रामायणे वाल्मीकिना सामाजिक-आदर्शानां, सामाजिक-जीवनस्य च मंगलोन्मुखी-मान्यतानां निर्माणं, तासां यथोचितं निर्वहणञ्च कृत्वा सभ्य:, सुसंस्कृत:, प्रगतिशीलश्च समाज: स्थापित:। रामायणे वाल्मीकिना अयोध्याया: प्रत्येकै: नागरिकै: सामाजिक-प्रतिमानानां पालनं कारितम्। अस्मादेव कारणाद् रामायणीय-समाजो द्रुतगतिना विकासपथं याति, सार्वभौमिकोन्नति: माङ्गल्यपूर्णसाफल्यञ्च प्राप्नोति। यतोहि "समाजो नराणां संघ:" अर्थात् समाजो नराणां समूहं वर्तते। यदि व्यक्ति: संस्कारयुक्तोऽस्ति तर्हि समाजोऽपि सुसंस्कृत एव भवति। रामायणीये समाजे प्रस्तुतानाम् आदर्श-प्रतिमानानां विश्लेषणं निम्नाङ्कितं वर्तते-

**1. परहितभावना-** परोपकाराद् श्रेष्ठ: कोऽपि धर्मो न भवति। रामायणे श्रीराम-सीता-भरत-लक्ष्मण-हनुमानादय: परोपकारस्य सर्वश्रेष्ठानि उदाहरणानि वर्तन्ते। हनुमता तु स्वकीयं सम्पूर्णं जीवनं परोपकाराय एव समर्पितम्। अत एव रामेण उक्तम्-

**चरिष्यति कथा यावदेषा लोके च मामिका।**

**तावत्ते भविता कीर्तिः शरीरेऽप्यसवस्तथा॥**[1]

भरतेनाऽपि रामाय उक्ति-

**वृद्धिकामो हि लोकस्य सर्वभूतानुकम्पकः।** [2]

एवं रामम् अधिकृत्य जटायुनाऽपि कथितम्-

**लोकानां च हिते युक्तो रामो दशरथात्मजः।** [3]

परकीयान् दुःखान् स्वकीयदुःखवद् स्वीकरणमेव मानवीयता वर्तते। एतादृशी परहितान्विता मानवता रामायणे प्रतिपदं प्राप्यते।

**2. कर्त्तव्यपरायणता**- सम्पूर्णस्य समाजस्य कृते कर्त्तव्याऽकर्त्तव्ययोः प्रवृत्तिनिवृत्तिविवेचनं रामायणे सरसतापूर्वकं प्रतिपादितम्। श्रीरामचन्द्रेण वनगमनरूपपितुराज्ञाया अविचारपूर्वकं परिपालनेन पुत्रत्वधर्मस्य परायणताऽभिव्यज्यते। पितुराज्ञां श्रुत्वा रामचन्द्रेणोक्तम्-

**एवमस्तु गमिष्यामि वनं वस्तुमहं त्वितः।**

**जटाजिनधरो राज्ञः प्रतिज्ञामनुपालयन्॥** [4]

ततः अयोध्याकाण्डे वचनवृतान्तं रामवनगमनं स्वकीयराज्याभिषेक-संकल्पनाञ्च श्रुत्वा भरतेनोक्तम्-

**किं कार्यं हतस्येह मम राज्येन शोचतः।**

**विहीनस्याथ पिता च भ्राता पितृ समेन च॥** [5]

एवमेव रामायणे भरतस्य भ्रातृत्वं, हनुमतः दासत्वं, सुग्रीवस्य मित्रत्वं, सीताया पत्नीत्वं इदानीन्तनीये काले समाजाय आदर्शस्तम्भाः सन्ति।

**3. योगक्षेमम्**- रामायणे वर्णितं योगक्षेमं इदानीन्तनीये काले व्याप्त-अव्यवस्थायाः कृते अत्यावश्यकम्। प्रायेण आधुनिकाः राजनेतारः भ्रष्टाचारस्य शोषणस्य च पर्यायभूताः सन्ति। भ्रष्टाचारं शिष्टाचारयितुं योगक्षेमस्य महती आवश्यकता वर्तते, यद् रामायणादेव सम्भवं सुकरञ्च। रामायणात् शिक्षां प्राप्य राजनेतृभिः समाजस्य राष्ट्रस्य च रक्षणार्थं, वञ्चितान् तदधिकारप्राप्त्यर्थं सदैव तत्परो भवितव्यः। अस्मिन्नेव विषये रामायणे अयोध्यावासिभिः कथितम्-

**युष्माकं राघवो नाथो योगक्षेमं विधास्यति।**

**सीता नारीजनस्यास्य योगक्षेमं करिष्यति॥** [6]

**4. विश्वबन्धुत्वभावना**- वसुधैव कुटुम्बकमिति भावनयैव भारतं विश्वगुरुपदवीं लब्धवान्। यस्य राष्ट्रस्य नागरिकाः विश्वबन्धुत्वभावपूरिताः भवन्ति, तस्योन्नतिः विकासश्च नूनमेव सिद्ध्यति। परञ्च साम्प्रतिके काले समाजे बन्धुत्वभावनायां न्यूनता दृश्यते। इदानीं भ्रातृषु एव, पुत्र-पित्रो एव, मित्रेषु एव च पारस्परिकं विवाद दरीदृश्यते। अतः मानवैः प्रेक्षणीयं, विचारणीयम्, अनुकरणीयञ्च राम-भरत-दशरथादेः व्यक्तित्वम्।

**गोमती**

**5. धर्मपरायणता**– वाल्मीकिरामायणे धर्मविषये वर्णितम्–

**धर्मो हि परमो लोके, धर्मे सत्यं प्रतिष्ठितम्।** [7]

अत्र धर्मशब्दस्य पर्यायः हिन्दू-मुस्लिम-सिक्खादिभ्यः सम्प्रदायेभ्यो न वर्तते, अपितु अस्य सम्बधं मानवोचितानि कर्तव्यानि प्रति आस्थया वर्तते। स्वकीयस्य समाजस्य च हितं गहन-सत्यस्य आचरणे निहितं वर्तते। सत्यप्रियव्यक्तिः कस्मादपि न बिभेति। यथा विभीषणेनोक्तम्–

**सत्यधर्माभिरक्तानां नास्तिमृत्युकृतं भयम्।** [8]

अतः वर्तमाने सर्वैः स्वकीयाभ्युदयार्थं राष्ट्रोन्नत्त्यर्थञ्च रामायणानुकूलो धर्मः आचरणीयः।

**6. त्यागभावना**– कर्मफलत्यागेन निरन्तरं शान्तेः प्राप्तिर्भवति। एवं रामायणनायकः रामचन्द्रः त्यागस्य प्रतिमूर्तिर्वर्तते। यथा स्वयमेव रामेणोक्तम्–

**नैवाहं राज्यमिच्छामि न सुखं न च मैथिलीम्।** [9]

रामायणस्य सर्वेषु आदर्शपात्रेषु त्यागभावनायाः बाहुल्यं दृश्यते। भरतस्य राजत्यागः, पतिव्रतासीतायाः रामानुरागे गृहत्यागः, वचनपालने राज्ञः दशरथस्य पुत्रत्यागः अस्य मार्मिकोदाहरणानि वर्तन्ते। अत एव मानवैः यतनीयं यद् धनार्जने त्यागे च सामञ्जस्यं स्थापयेत्।

**7. दयाभावना**– दयायाः एव व्यापकरूपं कारुण्यम् अस्ति। कारुण्यादेव वाल्मीकिः रामायणं रचितवान्। रामस्य हृदयमपि कारुण्येन आप्लावितं वर्तते। यथोक्तम्–

**रामः करुणवेदी च प्रजानां च हिते रतः।** [10]

समाजे सामञ्जस्यं स्थापयितुं हृदि दयाभावः आवश्यकः। अयमेव रामायणस्य मूलं वर्तते।

**8. मानवीयता**– वाल्मीकि रामायणे वर्णितानि जीवनमूल्यानि मानवं वैज्ञानिकोन्नतेः तकनीकि-उन्नतेश्च वञ्चितं न कुर्वन्ति, अपितु तानि मानवस्य लक्ष्यप्राप्त्यर्थं सहायकानि भवन्ति। रामायणं अन्यग्रन्थवद् आत्मनः परमात्मनश्च गूढं शब्दयोजनमकृत्वा सामान्यव्यक्तेः जीवनेन सम्बन्धितं आदर्शं अस्माकं समक्षं प्रस्तौति। वाल्मीकिना रामचन्द्रः सामान्यमानवरूपेण चित्रितः। यथा–

**मानुषो राघवो राजन् सुग्रीवश्च हरीश्वरः।**

**तस्मात् प्राणपरित्राणं कथं राजन् करिष्यसि॥** [11]

श्रीरामः कस्मिश्चिद् काले सामान्यमनुष्यवद् नैराश्यक्षणेषु प्रायोपवेशेन आत्महन्तुं तत्परो दृश्यते, क्वचित्तु अनाथवद् विलपति, परञ्च अपरे क्षणे समाश्वसितं भूत्वा द्विगुणितोत्साहेन उद्वेलितञ्च भूत्वा पूर्ववदेव कर्मेषु संलीनो भवति।

वस्तुतः मानवस्य मानवत्वं तैरुदात्त-मूल्यैः सिद्धयति, यैर्माध्यमेन मानवः स्वकीयं सात्विकं जीवनं व्यतीतं करोति। कस्यापि राष्ट्रस्य मूल्यांकनं ततः जनमानस्य आचरणगतमूल्याधारेण भवति, यानि मूल्यानि महापुरुषैः स्वकीये जीवने स्वीकृतानि सन्ति।

**निष्कर्षः**- वाल्मीकिना रामायणीय-पात्राणां माध्यमेन जीवन-जगतोर्मध्ये यानि सामाजिकमूल्यानि स्थापितानि तेषाम् अनुकृत्य सर्वत्र प्रतिष्ठायाः सफलताया आत्मानन्दस्य च प्राप्तिर्भवति। वाल्मीकेः मानवधर्मः व्यक्तिगतपरिधेः अतिक्रम्य समाजे युगे च विकासत्वं प्राप्नोति। वर्तमानकाले मानवाः स्वार्थसिद्धये जातिगतधर्ममाश्रित्य जनतां भ्रमयन्ति। अतः जनैः धर्मस्य रामायणानुवर्णितं वास्तविकमभिप्रायं विचिन्त्य स्वकर्त्तव्येषु संलग्नो भवितव्यः। साम्प्रतिके भौतिकीयुगे मानवः आध्यात्मेनैव सन्मार्गे यातुं शक्नोति। यतोहि आध्यात्मिकमूल्यानि एव मानवान् प्रेरयन्ति यद् कानि धर्मानुकूलानि कर्तव्यानि, यैः परमोद्देश्यस्य प्राप्तिर्भवति। मानवजीवनस्य साफल्यं वाल्मीकेः अध्यात्मेनैव सम्भवम्। रामायणवर्णितैः नैतिकगुणैः मानवः कुटुम्बस्य, समाजस्य, राष्ट्रस्य च उत्त्थानं करोति। वर्तमाने पथभ्रष्टजनैः रामायणीयनैतिकमार्गमनुसृत्य राष्ट्रनिर्माणे स्वकीया सहभागिता दातव्या।

## सन्दर्भ-संकेत

1. वाल.रा., उत्तरकाण्ड, 40/22
2. वाल.रा., अयोध्याकाण्ड, 1/37
3. वाल.रा., अरण्यकाण्ड, 50/4
4. वाल.रा., अयोध्याकाण्ड, 16/2
5. वाल.रा., अयोध्याकाण्ड, 73/2
6. वाल.रा., अयोध्याकाण्ड, 45/20
7. वाल.रा., अयोध्याकाण्ड, 21/41
8. वाल.रा., युद्धकाण्ड, 46/33
9. वाल.रा., अयोध्याकाण्ड,34/47
10. वाल.रा., किष्किन्धाकाण्ड, 17/17
11. वाल.रा., सुन्दरकाण्ड, 51/27

सन्दर्भग्रन्थाः

1. श्रीमद्वाल्मीकिरामायणम्, प्रथमखण्डः, गीताप्रेस, गोरखपुरम्।
2. श्रीमद्वाल्मीकिरामायणम्, द्वितीयखण्डः, गीताप्रेस, गोरखपुरम्।
3. संस्कृत साहित्य का इतिहास, आचार्य उपाध्याय बलदेवः, शारदा निकेतनम्, वाराणसी।
4. श्रीमद्वाल्मीकीय रामायण एक आर्ष महाकाव्य, डॉ. शर्मा भीमराज शास्त्री, राष्ट्रीयसंस्कृतसाहित्यकेन्द्रम्, जयपुरम्।
5. श्रीमद्वाल्मीकिरामायणम्, सम्पादक-परमहंस जगदीश्वरानन्द सरस्वती, विजयकुमार गोविन्दराम हासानन्द, नवदेहली।

शोधच्छात्रः, राष्ट्रियसंस्कृतसंस्थानम्
लखनऊपरिसरः

# सिद्धार्थचरिते महायानमत-मीमांसा

- अमियकृष्ण मिश्रः

भारतदेशे प्रचलितेष्वनेकेषु धर्मेषु सम्प्रदायेषु च बौद्धधर्मः महत्त्वपूर्णेस्ति। अस्य संस्थापकः महात्माबुद्ध आसीत्। बुद्धस्य सुव्यक्तित्व प्रभावेण भारते बौद्धधर्मः संस्थापिते बभूव। शनैः-शनैः भारते विश्वस्मिन् च बौद्धधर्मस्यानेके अनुयायिनः बभूवुः। बौद्धदार्शनिकाः साहित्यकाराश्च बौद्धधर्मदर्शनयोः विकासे महान् योगदानं चक्रुः। तेषु बौद्धदार्शनिकेषु बुद्धघोषः महत्त्वपूर्णः। सः बौद्धधर्मस्य महायानशाखानुयायी आसीत्। सः बुद्धजीवनीपरकं "सिद्धार्थचरितम्" रचयामास। कालान्तरे मतभेदात् बौद्धधर्मस्य विभाजनं द्वयोः भागयोः बभूव- 1. हीनयानम् 2. महायानम्।

बुद्धघोषः महायानानुयायी आसीम्। सः निजकृतिषु महायानमतस्य सिद्धान्तानि वर्णयामास। "सिद्धार्थचरिते" महायानतत्त्वान्वेषणप्राक् महायानमतस्य सिद्धान्तानि ज्ञेयानि सन्ति। अतः प्रथमतः महायान शाखायाः परिचयः निम्नवदस्ति-

**1. महायानशाखापरिचयः**

**उद्भवः विकासश्च**

बौद्धधर्मस्य प्रगतिशीला शाखा महायानमस्ति। प्रायः मन्यते यत् हीनयानस्य दोषाणां प्रतिकाररूपे महायानं विकसितं बभूव। अस्याः शाखायाः उद्भवविषये आचार्य नरेन्द्रदेवः लिलेख-

"बुद्धचरित" से प्रभावित होकर बौद्धों में एक नवीन विचार पद्धति का उदय हुआ। अष्टांगिक मार्ग की जगह पर बोधिसत्त्वचर्या का विकास हुआ और इस समुदाय का आदर्श अहवं न होकर बोधिसत्त्व हुआ, क्योंकि भगवान बदधत्त्व की प्राप्ति के पर्व तक 'बोधिसत्त्व' थे। बोधिसत्त्व उसे कहते है जो सम्यक् ज्ञान की प्राप्ति चाहता है। जिसमें सम्यक ज्ञान है उसी के चित्त में जीवलोक के प्रति करूणा का प्रादुर्भाव हो सकता है। इस नवीन धर्म का नाम महायान पड़ा।

महायानस्य उदभवविषये डा. ममता मिश्रा लिलेख-

"हीनयान धर्म की संकीर्णता एवं अव्यावहारिकता में ही महायान धर्म का बीज अन्तभूत था। महायान का उद्गम वस्तुतः बौद्धधर्म की द्वितीय संगीति में ही हुआ।

कालान्तर में नास्तिकतावश हीनयान सम्प्रदाय अलोकप्रिय हो गया। यह जनता को अप्राप्य था। बाद्धधर्म के समर्थकों के कुछ अन्यायियों ने हीनयान सम्प्रदाय के विपरीत एक दूसरे सम्प्रदाय का जन्म दिया जो जनसाधारण के मस्तिष्क और हृदय को सन्तुष्ट कर सके। इस सम्प्रदाय का नाम महायान पड़ा। इस सम्प्रदाय को सहजयान भी कहा जाता है, क्योंकि प्रत्येक व्यक्ति इसके सिद्धान्तों को हृदयंगम सुगमता से कर सकता है।''

डा. ब्रजमोहनपाण्डेयः "नलिनः" लिलेख- "महायान के प्रवर्तन में महासांघिक तथा उस की शाखाओं का विशेष योगदान रहा है। महायान बुद्धत्त्व में विश्वास रखता है तथा बुद्ध को सर्वथा लोकोत्तर मानता है।"

**महायानमतस्य सिद्धान्तानि-**

"महायानाविधर्मसंगतिसूत्र" ग्रन्थे असंगः महायानमतस्य सप्तवैशिष्ट्यानि वर्णयामास-

1. महायानं विस्तृतमस्ति।
2. मतमेदं सर्वजीवेभ्यः प्रति अनुरागसमर्थकमस्ति।
3. विषयीविषयोः परमतत्त्वस्य निषेधं कृत्वा केवलं चैतन्यमेव मन्यते।
4. मानवस्य आदर्शः बोधिसत्त्वप्राप्तिरस्ति। सर्वेभ्यः सांसारिकजीवेभ्यः प्रति निर्वाणप्रदातुं बोधसत्त्वं समर्थमस्ति।
5. उपायकौशलानुसारेण मानवमत्यानुसारेण वा बौद्धिकस्तरानुसारेण वा बोधिसत्त्वमुपदेशयामास।
6. महायानस्य अन्तिमोद्देश्यं "बुद्धत्त्व" प्राप्तिरस्ति।
7. जगतः सर्वजनाध्यात्मिकावश्यकता पूर्ण कर्तु बोधिसत्त्वं सक्षमस्ति।
8. महायानमतेऽवतारवादः महापुरुषाणां लोकोत्तरता च स्वीकृतास्ति।

महायानमतस्य महती विशेषता त्रिकायवादोऽस्ति। महायानमते चत्त्वारः ब्राह्मविहाराः स्वीकृताः सन्ति- मैत्रीकरूणामुदितोपेक्षा। महायानमतानुसारेण सर्वसांसारिकजीवाः निर्वाणं लभेरन्। अस्य मूलावधारणास्ति

**सर्वे भवन्तु सुखिनः, सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु, मा कश्चिद् दुःखभाग्भवेत्।।**

केवलं आत्मकल्याणमेव न वरमपित् सर्वसांसारिकजीवानां कल्याणं भवेत्। महायानमते बहूनि बोधिसत्त्वानि कल्पितानि सन्ति। त्रिकायवादोऽपि मान्यः अस्ति। वस्तुतः महायानमतं मानवधर्मरूपे प्रतिष्ठितमस्ति। अस्मिन् मते "बुद्धः" अलौकिक व्यक्तित्त्वरूपे मान्योऽस्ति।

"सिद्धार्थचरिते" एतेषां तत्त्वानां वर्णनं निम्नवदस्ति-

**1. बुद्धस्य अलौकिकव्यक्तित्त्ववर्णनम्**

महायानानुयायिनः समाजे बौद्धधर्मबुद्धयोश्च सुप्रभावसंस्थापनार्थ बुद्धस्य कल्पना अलौकिक व्यक्तित्त्वरूपे चक्रुः। तेऽनुयायिनः स्वीकारयामासुः यत् विश्वकल्याणाय बुद्धः अवतरितः बभूव। सः अलौकिकव्यक्तित्त्ववानासीत्। वस्तुतः जनतायां बौद्धधर्मस्य सुप्रभावसंस्थापनायैव बुद्धस्य कल्पना यादृशरूपे कृता। बुद्धघोषरप्यासीत् महायानानुयायीति कारणात् सोऽपि बुद्धवर्णनमलौकिकव्यक्तित्त्वरूपेण चकार, यथा-

सः लिलेख यत् बुद्धः एतावान् महिमावान् अस्ति यत् कोऽपि जनः तस्य महिमाविषये वक्तुं अक्षमः अस्ति-

यस्यैकदेशं यतयोऽपि वक्तुं नालं बभूवुर्नलिनासनाद्याः।
शास्तुस्तदेतच्चरितापदानं वक्तुं मनीषा मम मौग्ध्यमेव॥1.2॥

बुद्धस्य जन्मकाले तस्य अलौकिकव्यक्तित्त्वप्रभाववश बहवः सुसंकेताः सजाताः, यथा-

तत्रान्तरे तामरसैरूदारैरूदञ्चितैरञ्चितपञ्चवर्णैः।
सञ्छादिता तस्य विहारहेतोः कृतोपहारेव बभूव पृथ्वी॥3.11॥
शाखासु शाखासु समुदभवदभिविचित्रपत्रैः शतपत्रजाते।
चकाशिरे तस्य विलोकनाय सजातनेत्रा इव शाखिनोऽपि॥3.1211
अस्माकमुत्पतिरिवात्र भूमौ बुद्धाकुराणामपि दुर्लभति।
सन्दर्शनायेव शरीरभाजा नालीकमासीन्नभसः स्थलेपि॥3.1311
महात्मनस्तस्य महीध्रपातगुरूणि पादाक्रमाणि सोढुम्।
अपारयन्तीव भृशं चकम्पे विश्वम्भरा विश्लथशैलबन्धाः॥3.1511
अमुष्य सर्वत्र वितायमानैराकाशगंगासलिलावदातैः।
यशः प्रवाहैरिव लिप्यमाना दिशः समस्ताः विशदीबभूवुः॥3.171

**2. जनकल्याण-भावना**

महायानसम्प्रदाये जनकल्याणस्य महती भावना विलसति। महायानानुसारेण जनकल्याणैव धर्महेतुरस्ति। जनकल्याणाभावे कोऽपि धर्मः वस्तुतः धर्मः न भवति। बुद्धः निजजीवनं जनकल्याणायैव समर्पयामास। "सिद्धार्थचरिते बुद्धघोषः लिलेखबुद्धरूपेऽवतारग्रहणाय तुषिताधिपतिः सर्वप्रथमं जनकल्याणायैव विचारयामास-

**ससंसारघोरपरितापजुषां जनानां, संरक्षणाय...2.31॥**

तुषिताधिपतिः स्वयमेवुवाच यत् जनकल्याणायैव सः पुण्यानि चकार। जनकल्याणकार्ये तानि पुण्यानि सहायकानि भवन्तु-

**शुद्धोदनस्य सुततामहमेत्य सत्यं सम्बोधनं त्रिजगतां नियतं करिष्ये।**
**अंगैर्धनैरसुरभिप्यहमेतदेव सम्प्रार्थ्य पुण्यनिचयं कृतवान् पुरेति॥2.53॥**

दशमसर्गे देवांगनाः सिद्धार्थमुवाच यत् एकदा त्वं नेत्रहीनजनाय निजलोचनयुग्मं ददिथ-

**उत्पाट्य लोचनयुगं द्विजपुंगवाय त्वां दत्तवानिति॥**10.48॥
**अग्रे ताः ऊचुःउच्छिय मस्तकममुदस्तरिपुप्रभावं त्वां दत्तवानिति॥10.50॥**

**3. अवतारवादः**

महायानमतेऽवतारवादोऽपि स्वीकृतोऽस्ति। अस्मिन्नवतारवादे बुद्धः अलौकिकव्यक्तित्त्वरूपेण मान्योऽस्ति। महायानानुसारेण संसारकल्याणायैव बुद्धः अवतरितः बभूव। तुषिताधिपतिः स्वयमेवोवाच

यत् सः शुद्धोदनस्य पुत्ररूपे अवतरितः भविष्यति-

**शुद्धोदनस्य सुतताहममेत्य सत्यं॥2.53॥**

**4. ब्राह्मविहारवर्णनम्**

महायानमते ब्राह्मविहाराः महत्त्वपूर्णाः सन्ति। ब्रह्मतुल्यतत्त्वेषु विहारैव ब्राह्मविहारः कथ्यते। ब्राह्मविहारपालनेन सामान्यजनोऽपि अलौकिकव्यक्तित्ववान् भवितुं शक्नोति। ब्राह्मविहाराः निम्नवद् सन्ति- **1. मैत्री 2. करुणा 3. मुदिता 4. उपेक्षा**

''सिद्धार्थचरिते" एतेषां तत्त्वानां वर्णनं निम्नवदस्ति-

**1. मैत्री**-अविरोधं मैत्री। बुद्धस्य विरोधं केनापि सह नासीत। सः सर्वजीवेभ्यः प्रति दयालुः आसीत। महायानमते महापुरुषाणां प्रमुखं लक्षणं मैत्री अस्ति। अतः बुद्धघोषः मैत्र्याः वर्णनं तुषिताधिपत्युः पत्नीरूपे चकार- **मैत्रीकला ॥2.36॥**

"सिद्धार्थचरिते" बुद्धघोषः मैत्रीभावसम्पन्नस्य सन्यासिपुरुषस्य वर्णनं चकारप्रसन्नपूर्णेन्दुनिभाननयुतिः प्रभूतमैत्रीपरिवारहिताशयः॥6.40॥

**2. करुणा**- सिद्धार्थः कारुणिकः आसीत्। आयैव बुधघोषः लिलेख यत् भगवानबुद्धः जगति सकरुणदृष्टिपातं करोति- **कारूण्यकल्लोलितदृष्टिपातं॥1.1॥**

**देवाः तुषिताधिपतिं कृपालुः ऊचुः निष्यन्दमाननिरपायकृपाप्रवाहवीची॥ 2.3811**

करुणयैव सः वृद्धपुरुषं रुग्णजनं दृष्ट्वा दयार्द्रः बभूव।

**3. मुदिता**- परेषां जनानां सत्कार्याणि दृष्ट्वैव जाता प्रसन्नतैव मुदितास्ति। एवंप्रकारेण परोपकारिणः जनाः परोपकारकर्तुं प्रोत्साहिताः भवन्ति।

**4. उपेक्षा**- असम्बद्धविषयप्रतितटस्थतैवोपेक्षा। असम्बद्धविषयेषु नतिर्न विधेया। मुमुक्षुसिद्धार्थ स्वप्रत्याकृष्टकर्तुम् यदा सुन्दरयः प्रयत्नं चक्रुः तदा सिद्धार्थः तानुपेक्षयांमास-

**असक्तहृदयस्तासाम् अंगहारमनोहरे।**

**संगीते नवगीतेऽपि स चिन्तामन्तरा ददौ॥9.4॥**

**उपसंहारः**- एवं प्रकारेण सिद्धं भवति यत् बुद्धघोषः जनशिक्षायैव बुद्धात्रितं काव्यं रचयामास। तस्य मूलोद्देश्यमस्ति यत् जनाः बौद्धोपदेशानां प्रति निष्ठावन्तः भवेयुः। समाजे बुद्धः बौद्धधर्म च प्रतिष्ठितौ भवेताम्। समाजस्य धार्मिकोन्नतिं भवेत्।


सन्दर्भाः

1. सिद्धार्थचरितकाव्यम्- बुद्धघोषः, व्याख्याकारः- स्वामी



शोधच्छात्रः (साहित्यविभागः)

राष्ट्रियसंस्कृतसंस्थानम्, लखनऊपरिसरः

गोमती